Sanskrit

KĀLIDĀSA.

Mālavikāgnimitra. A Sanskrit drama. With commentary by Raja Mṛtyuṃjaya Niśśaṅka of Sangamwalsa. Edited by Paravastu Veṅkaṭaraṅgācārya and Ākeḷḷa Veṅkaṭa Śāstri. pp.286. Vizagapatam, 1892.

श्रीरस्तु ·

श्रीमत्कविकुलशिरोमणिना श्रीकाळिदासमहाकविना

विरचितम्

# माळविकाग्निमित्रम्

नाम नाटकम्

अतिसंगृहीतचिरन्तनानेकव्याख्यानसंशंकितस्वान्तानाम्
गैर्वाणभाषाभ्यसनाभिलाषुकजनानामत्यन्तसहकाराय वै
शाखपट्टणखण्डमण्डनायमानसङ्गमवलसधराधिनायकश्रीम
च्छाकुन्तलविक्रमोर्वशीयनामनाटकव्याख्यानाद्यनेकग्रन्थ
प्रणेतृश्रीमृत्युञ्जयनगरवास्तव्यश्रीमन्मृत्युञ्जयनिश्शंकक्षो
णीपालविरचितया पण्डितजनाग्रगण्यैस्स्वकीय विद्यागुरुभिः
महामहोपाध्यायबिरुदांकैः श्रीपरवस्तुवेंकटरङ्गाचार्यवर्यैः
स्वास्थानपण्डितचूडामण्यांध्रगीर्वाणवैयाकरणश्रीमदाकेळ्ळ
वेंकटशास्त्रिणा च सम्यगालोडिताङ्गीकृतया मृत्युञ्जयक्षोणी
पालीयद्वितीयनामधेयसहितविबुधरञ्जन्याख्यय
प्रतिपदव्याख्यायासाकं संयोज्य

वैशाखपट्टणीयायाम् आर्षमुद्राशालायाम्
श्रीमन्मृत्युञ्जयनिश्शंकमहीपालानुकम्पासम्पादित
नागरमुद्राभिर्मुद्रितमाचन्द्रतारार्कं विजेजीयताम्·

१८९२

श्रीरस्तु.

श्रीशारदायैनमः.

सव्याख्यान

# माळविकाग्निमित्रनाटकम्.

श्लो॥ एकैश्वर्येस्थितोऽपिप्रणतबहुफले यस्स्वयंकृत्तिवासाः
कान्तासंमिश्रदेहोऽप्यविषय मनसां यःपरस्ताद्यतीनाम्।
अष्टाभिर्यस्यकृत्स्नंजगदपितनुभिर्बिभ्रतो नाभिमान
स्सन्मार्गालोकनाय व्यपनयतुसवस्तामसीं वृत्तिमीशः॥१

व्याख्यानप्रारम्भः.

श्रीवाणीनगजाधीशान् प्रणम्यक्रियतेमया।
श्रीमाळविकाग्निमित्र व्याख्याविबुधरञ्जनी॥१॥
श्रीमृत्युञ्जयनिश्शंक भूपालेनविरच्यते।
सुखबोधायसर्वेषां व्याख्या विबुधरञ्जनी॥२॥
श्रीमाळविकाग्निमित्र व्याख्यायाविबुधरञ्जन्याः।
निर्विघ्नपरिसमाप्त्यै विघ्नेशंनौम्यहंनमःपूर्वम्॥३॥

अथ तत्रभवान् काळिदासाभिख्यो महाकवि र्माळविकाग्निमित्राख्यं नाटकं विरचयितुकाम आदौस्वेप्सित निष्प्रत्यूह सिद्ध्यर्थं काव्यंयशसेऽर्थकृतइत्यादि शास्त्रविधिना आशीर्नमस्क्रियावस्तु निर्देशोवापि तन्मुखमिति शास्त्रात्काव्यादौ आशीराद्यन्यतमावश्यम्भावात् पूर्वरङ्गस्यप्रधानाङ्गभूतां नान्दीरूपामाशिषं प्रयुंक्ते॥ एकैश्वर्यइति॥ यः-ईशः। प्रणतबहुफले-प्रणतानां-भक्तानां। बहूनि-अनेकानि भोगापवर्ग प्रधानानि फलानि यस्मात्तथाविधे। एकैश्वर्ये- अणिमाद्यष्टकरूपेसर्वेश्वरभावे। स्थितः- प्रतिपादकत्वेननिविष्टोऽपि। स्वयं- आत्मना। स्वरूपेणेत्यर्थः॥ नि॥ स्वयमात्मनेत्यमरः॥ कृत्तिवासाः- चर्माम्बरः। यः- ईशः। कान्तासंमिश्रदेहः- उ

मासंयुक्ताधङ्गस्सन्नपि । अविषयमनसां - रूपादिविषयानाकृष्टचित्तानां ॥नि॥रूपंशब्दोगन्धरस स्पर्शाश्चविषयाअमी इत्यमरः । यतीनां - योगिनां ॥ नि ॥ ये निर्जितेन्द्रियग्रामा यतिनोयतयश्चत इत्यमरः । परस्तात् - परः । श्रेष्ठइत्यर्थः ॥ प्रथमार्थे अस्तातिप्रत्ययः । अष्टाभिः- पृथिव्यादिभिः । तनुभिः - मूर्तिभिः ॥ नि ॥ स्त्रियांमूर्तिस्तनुस्तनूः इत्यमरः ॥ श्लो ॥ पृथिवीसलिलञ्चैववायुराकाशमेवच । सूर्याचन्द्रमसौसोम याजीचेत्यष्टमूर्तय इति प्रामाण्यादितिभावः। कृत्स्नं - समस्तं । जगत् - विश्वं । बिभ्रतः - धारयतोऽपि । यस्य - ईशस्य । अभिमानः - अहंकारः । न - नविद्यते । सईशः - तादृशः शिवः । वः - युष्माकं । सामाजिकानामित्यर्थः । सन्मार्गलोकनाय- सन्मार्गस्य- मोक्षोपायस्य । सत्पथस्यच । आलोकनाय - प्रदर्शनाय ॥ तादर्थ्ये चतुर्थी । तामसीं अज्ञानरूपां । अन्धकारात्मिकांच । वृत्तिं - चित्तव्यापारविशेषं । व्यवहारञ्च । व्यपनयतु - विनाशयतु । अत्रईश्वरेपरमैश्वर्याकिञ्चनत्वादीनां परस्परविरुद्धधर्माणामेकत्र समावेशावर्णनेन स्फुरतो विरोधस्य भगवतः अनिर्वाच्यमहिमतया आभासीकरणाद्विरोधाभासः॥ अयंचनान्दीश्लोकएव। तल्लक्षणंतु ॥श्लो॥ आशीर्नमस्क्रियारूप श्लोकःकाव्यमुखोदितः । नान्दीतिकथ्यतेतस्याः पदादिनियमोपिवेति । अत्रलक्षणेवाशब्देन विकल्पबोधनात् पदनियमाभावेपिनास्यश्लोकस्य नान्दीत्वाभावइति सुप्रसिद्धमेव । अलमतिविस्तरेण ॥

नान्द्यन्तेसूत्रधारः ॥ **अलमतिविस्तरेण** नेपथ्याभिमुखमवलोक्य । **मारिष ! इतस्तावत्** ॥

अथप्रस्तावनां प्रतिपादयितुमिच्छुः तदङ्गभूतां प्ररोचनामाह । नान्द्यन्तइति ॥ नान्द्यन्ते - नान्द्याः - उक्तलक्षणायाः । अन्ते-करणावसाने । सूत्रधारः - काव्यार्थसूचको नटवर्गाधिपः । आहेतिशेषः । किमिति । अतिविस्तरेण - बहुशब्दप्रपञ्चेन ॥नि॥ सतुशब्दस्यविस्तरइत्यमरः ॥ अलं - मास्तु इत्युक्त्वानेपथ्याभिमुखं- नेपथ्यस्य -नटवर्गप्रदेशस्य । अभिमुखं -पुरोमुखं। अवलोक्य- प्रेक्ष्य । हेमारिष - आर्य । इतस्तावत्- इमंप्रदेशंप्रति । मत्सकाशमित्यर्थः । आगच्छेतिशेषः ॥

प्रविश्य पारिपार्श्विकः ॥ **भाव ! अयमस्मि** ॥

प्रविश्येति ॥ पारिपार्श्विकः - पार्श्वे - समीपे परिपार्श्वं । विभक्त्यर्थेऽव्ययीभावः । तत्रभवः पारिपार्श्विकः ॥ सू ॥ अध्यात्मादित्वाट्ठञ् । सूत्रधारात्किञ्चिदूनोनटः । प्रविश्य - रङ्गस्थलम्प्राप्य । कथयति । किमिति । हेभाव - विद्वन् सूत्रधार । अयमस्मि - एषोऽहमागतोऽस्मि ॥

सूत्रधारः ॥ **अभिहितोऽस्मि परिषदा श्रीकाळिदासग्रथितवस्तु माळविकाग्निमित्रं नामनाटक मस्मि न्वसन्तोत्सवे प्रयोक्तव्यमिति, तदारभ्यतां संगीतकम् ॥**

सूत्रधारइति ॥ सूत्रधारः - प्रधाननटः । वक्ति । किमिति । श्रीकाळिदासग्रथितवस्तु - श्रीमताकाळिदासेन तन्नाम्नाकविना ग्रथितं - योजितम् । वस्तु - अभिनेयपदार्थजातंयस्मिंस्तत् । माळविकाग्निमित्रंनाम - माळविकया - तन्नामिकया नायिकयासहितोऽग्निमित्रः । शाकपार्थिवादित्वात्साधुः । तमधिकृत्यकृतंमाळविकाग्निमित्रम् ॥ सू ॥ अधिकृत्यकृतेग्रन्थ इत्यण् । द्वन्द्वसमासेतु किरातार्जुनीयमित्यादिवत् शिशुक्रन्देत्यादिसूत्रेण छप्रत्ययःस्यात् । नाम - प्रसिद्धं । माळविकाग्निमित्रमिति प्रख्यातमित्यर्थः । नाटकम् - प्रख्यातवृत्तम् दृश्यंकाव्यम् । अस्मिन् - वर्तमाने । वसन्तोत्सवे - वसन्तऋतुप्रयुक्तोत्सवे । प्रयोक्तव्यम् - अभिनेतव्यम् । अभिनयश्चयद्यपिनाटकस्थपात्राणामेव । तथापि तदुपलक्षितरूपकस्याप्यभिनयउपचर्यते । इति - एवंप्रकारेण । परिषदा - सभास्थितजनेन । अभिहितः - आज्ञप्तः । अस्मि - भवामि । तत् - तस्मात् । सङ्गीतकं - तौर्यत्रिकम् । आरभ्यताम् - उपक्रम्यताम् । युष्माभिरितिशेषः ॥

पारि ॥ **मातावत्प्रथितयशसां धावक सौमिल्ल कविपुत्रादीनां प्रबन्धा नतिक्रम्य वर्तमानकवेः काळिदासस्य कृतौ किंकृतो बहुमानः ॥**

पारिपार्श्विकइति ॥ पारिपार्श्विकः- मारिषः । ब्रूते । किमिति । मातावत् - इदमिदानीं नयुक्तम् । कुतः । प्रथितयशसाम् - दिगन्तरविख्यातकीर्तीनां । धावकसौमिल्लकविपुत्रादीनां - एतत्प्रभृतीनांकवीनां । प्रबन्धान् - नागानन्दरत्नावळी प्रियदर्शनादीन्ग्रन्थान् । अतिक्रम्य - अवधीर्य । वर्त

मानकवेः - आधुनिकपण्डितस्य । कालिदासस्य - एतन्नाम्नः । कृतौ - प्रबन्धे । माळविकाग्निमित्रइत्यर्थः । बहुमानः - समादरः ॥ किं - किमर्थं । कृतः - विहितः । सामाजिकै रित्यध्याहारः ॥

सूत्र ॥ अयि विवेक विश्रान्त मभिहितम् । पश्य ॥

श्लो ॥ पुराणमित्येव नसाधुसर्वं
नचापिकाव्यम् नवमित्यवद्यम् ।
सन्तःपरीक्ष्या न्यतर द्भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥ २ ॥

सूत्रधारइति ॥ सूत्रधारःप्राह । किमिति । अयि - हे मारिष । विवेकविश्रांतम् । विवेकः - सदसत्परिशीलनं । विश्रांतो - निवृत्तोयस्मात्तत्तथेति क्रियाविशेषणम् ॥ सू ॥ आहिताग्न्यादित्वा न्निष्टान्तस्य परनिपातः । विवेकशून्यमितिपाठेतु - विवेचनरहितमित्यर्थः । अभिहितमुक्तं त्वयेतिशेषः । कुतः । पश्य - जानीहि । पुराणमिति ॥ सर्वं - समस्तं । काव्यम् - प्रबन्धरूपासत्कृतिः । पुराणं - प्राचीनमिति हेतुनैव । साधु - निर्दोषम् । न - नभवति । सर्वं काव्यम् । नवं - नूतनमितिहेतुनापि । अवद्यं-दोषसहितञ्च । न - नभवेत् । काव्यस्यगौरवागौरवयोर्गुणदोषौप्रधानकारणे । ननुप्राचीनत्वनवीनत्वे इत्याशयः ।कुतः । सन्तः - सदस द्विवेकिनस्तु । परीक्ष्य - परिशील्य । गुणदोषाविति शेषः । अन्यतरत् - तयोरेकं । निर्दोषं काव्यमित्यर्थः । भजन्ते - सेवन्ते । मूढः - विवेकशून्यः । परप्रत्ययनेयबुद्धिः - परस्य - अन्यस्य । प्रत्ययेन - विश्वासेन । नेया - प्राप्या । बुद्धिः-शेमुषी यस्यसः । भवतीतिशेषः । नतुस्वतन्त्रइतिभावः ॥

पारि ॥ आर्यमिश्राः प्रमाणम् ॥

पारिपार्श्विइति ॥ पारिपार्श्विकःप्राह । आर्यमिश्राः - पूज्यतमाः । युष्मितिशेषः । पूज्यत्वाद्बहुवचनम् । प्रमाणं - प्रमातारः । कर्तव्याकर्तव्यनिर्णेतारइत्यर्थः ॥ नि ॥ प्रमाणं हेतुमर्यादा शास्त्रेयत्ता प्रमातृष्वित्यमरः ॥

सूत्र ॥ तेनहि त्वरतां भवान् ॥

श्लो॥ शिरसा प्रथमगृहीता
माज्ञामिच्छामि परिषदः कर्तुम्।
देव्याइवधारिण्या
स्सेवादक्षः परिजनोऽयम्॥ ३॥

---

सूत्रधारइति॥ सूत्रधारःप्राह। किमिति। तेनहि - गुणवत्त्वाद्गौरवास्पदत्वेनैव॥ नि॥ हिहेतावधारणइत्यमरः॥ भवान्। त्वरताम् - अविलम्बंकरोतु। रङ्गसंविधानइतिशेषः। तद्धेतुमाह। शिरसेति॥ अहं। शिरसा - मूर्ध्ना। प्रथमगृहीतां - आदौस्वीकृतां। परिषदः - सभायाः। सभासदामित्यर्थः। आज्ञां - शासनं। सेवादक्षः - परिचर्यासमर्थः। अयं - पुरोवर्ती। परिजनः - परिचारिकाजनः। धारिण्याः - तदभिधानायाः। देव्याः - पट्टमहिष्याः। आज्ञामिव। कर्तुं - सम्पादयितुम्। इच्छामि - अभिलषामि। अत्रउपमाव्याजेन अनन्तरपात्रप्रवेशस्सूचितः॥

---

इतिनिष्क्रान्तौ॥

---

इतीति॥ इति - एवमुक्त्वा। निष्क्रान्तौ - निर्गतौ। सूत्रधारमारिषावित्यध्याहारः॥

---

## इतिप्रस्तावना॥

---

इतीति॥ प्रस्तावना - सूच्यार्थ सूचकसूत्रधारमारिष सम्भाषणरूपा। इति समाप्ता॥ नि॥ इतिहेतुप्रकरण प्रकारादि समाप्तिष्वित्यमरः॥ सूत्रधारादीनां लक्षणानि रत्नदीपिकाख्यायां विक्रमोर्वशीव्याख्यायां द्रष्टव्यानि॥

---

# श्री

# प्रथमोऽङ्कः॥

( ततःप्रविशति वकुलावलिका. ) वकुला॥ आणत्तम्हि देवीए धारिणीए अचिरोवणादा छलियणाम णट्टअ अन्तरे [उवदेस ग्गहणेअ] कीरिसी मालविएत्ति णट्टाआरिअं अज्जगणदासं पुच्छिदुं। ता संगीदसालं गच्छम्हि॥ छाया॥ आज्ञप्तास्मि देव्या धारिण्या, अचिरोपनीता छलिकनाम नाट्यान्तरे (उपदेशग्रहणेच) कीदृशी मालविकेत्ति नाट्याचार्यं आर्यगणदासं प्रष्टुम्। तस्मात् संगीतशालांगच्छामि। इति परिक्रामति॥

---

अथांकःप्रस्तूयते. ततःप्रविशतीत्यादि॥ ततः-अनन्तरं। वकुलावलिका-एतन्नाम्नीधारिणीदेवी सहचरी। प्रविशति-रङ्गस्थलंप्राप्नोति। वकुलावलिकेति। वकुलावलिकाव्रते। किमिति। अचिरोपनीता-अचिरम्-नूतनंयथातथा। उपनीता-विद्यारम्भे धृतव्रता। मालविका-एतन्नामिकाबालिका। छलिकनामनाट्यान्तरे-शर्मिष्ठानामकययातिजायाविरचित छलिकनाम नाटकान्तरे। उपदेशग्रहणे-शिक्षापरिग्रहेविषये। कीदृशी-कीदृग्विधेति। नाट्याचार्यं-नृत्यविद्योपदेष्टारं। गणदासम्-एतन्नामकभरताचार्यं। प्रष्टुम्-अनुयोक्तुमिति॥ प्रश्नोऽनुयोगःपृच्छाचेत्यमरः॥ धारिण्या-एतदाख्यया। देव्या-पट्टमहिष्या। आज्ञप्ता-नियुक्ता। अस्मि-भवामि। तस्मादहं। सङ्गीतशालां-नाट्यवेश्मप्रति। गच्छामि-यामि। इति-एवमुक्त्वा। परिक्रामति-गच्छति॥

---

ततःप्रविशत्याभरणहस्ता द्वितीयाचेटी ।प्रथमा। द्वितीयांदृष्ट्वा ॥

हळा कोमुदीए! कुदो दाणीं इअं दे धीरदा जं समीएवि अदिक्कमन्ती इदो दिठ्ठिं णदेसि ॥ छा ॥ हला कौमुदिके! कुतस्ते इयंधीरता यत्समीपेऽप्यतिक्रामन्ती इतोदृष्टिनददासि ॥

---

ततइति ॥ ततोऽनन्तरं । द्वितीया-प्रथमानन्तरा । चेटी - कौमुदिकाख्याप्रसाधिका । प्रविशति-रङ्गस्थलंप्राप्नोति । किंभूतासती- आभरणहस्ता-गृहीतालंकारासती । तत्र । प्रथमा - वकुलावळिका । द्वितीयां-कौमुदिकां । दृष्ट्वा-ईक्षित्वा । प्राहेतिशेषः । किमिति । हलाकौमुदिके - कौमुदिकाख्येसखि ॥ नि ॥ हण्डे हञ्जे हला ह्वाने नीचां चेटीं सखींप्रतीत्यमरः ॥ इयंधीरता - एतादृशंधैर्यम् । ते- तव । कुतः - कस्मात्कारणात् । जातेतिशेषः । यद्यस्मात् । समीपे - निकटेपि । अतिक्रामंती - आतिक्रम्य गच्छन्ती । त्वम् । इतः - अस्मिन्प्रदेशे । दृष्टिं - वीक्षणम् । नददासि -न प्रसारयसि । समोपस्थितामपिमामवधीर्यकस्मान्नपश्यसीत्याशयः ॥

---

द्वितीया ॥ अम्हो वउळावळिआ। सहि! देवीए इदं सिप्पिसआसादो आणीदं णागमुद्दासणाहं अंगुळीअअं सिणिद्धं णिभाळअन्ती तुह उआळम्भे पडिदम्हि ॥ छा ॥ अम्हो वकुलावळिका। सखि! देव्याइदं शिल्पिसकाशा दानीतं नागमुद्रासनाथ मंगुळीयकम् स्निग्द्धं निभाळयन्ती तवो पालम्भे पतितास्मि ॥

---

द्वितीयेति ॥ द्वितीया - कौमुदिका । वदति । कथम् । अम्हो वकुलावळिका - आश्चर्यमियमेव वकुलावळिकाख्यासहचरी । अम्हे इत्याकस्मिकदर्शनेआश्चर्यद्योतकमव्ययम् । हेसखि - वकुलावळिके । शिल्पिनस्सकाशात - स्वर्णकारस्यानिकटात् । आनीतम - आकृष्टम् । आहृतमित्यर्थः । नागमुद्रासनाथम - नागमुद्रया - आशीविषविषापहारिण्यामणिमुद्रि

कया । सनाथम् - संयुक्तम् । इदम् - मत्करस्थितम् । देव्याः - धारिण्याः । अंगुलीयकं - करांगुल्याभरणं । स्निग्धम् - सान्द्रंयथातथा ॥ नि ॥ स्निग्धं तुमसृणेसान्द्रइत्यमरः । तन्निष्ठचित्तमित्यर्थः । निभालयन्ती-निधयायन्ती । तस्मादहम् । तव । उपालम्भे- निन्दायां । पतिता - प्राप्तास्मि । अंगुलीयकदृष्ट्यात्वंनावलोकितेत्याशयः । विदूषकस्य कृत्रिमविषापहरणार्थमिदमेवानीत मुपयोक्ष्यतइति चतुर्थांकेस्पष्टीक्रियते ॥

---

प्रथमा ॥ विलोक्य ॥ ठाणे सज्जदि दे दिट्ठी । इमिणा अंगुळीअएण उब्भिण्णकिरणकेसरेण कुसुमिदोविअ दे अग्गहत्थो ॥ छा ॥ स्थाने सज्जति ते दृष्टिः अनेनांगुलीयकेनोद्भिन्न किरणकेसरेण कुसुमित इवतेऽग्रहस्तः ॥

---

प्रथमेति ॥ प्रथमा । विलोक्य - द्वितीयांवीक्ष्य । वक्ति । हे कौमुदिके । ते - तव । दृष्टिः - वीक्षणं । स्थाने - साम्प्रतं ॥ नि ॥ युक्तेद्वे साम्प्रतंस्थानइत्यमरः ॥ सज्जति -सक्तंभवति । अंगुलीयकेइतिशेषः । उद्भिन्नकिरणकेसरेण - उद्भिन्नाः - विकसिताः । किरणाः - मयूखाएव । केसराः - किंजल्कायस्यतेन । अंगुलीयकेन अनेन- देवीसम्बन्धिनेत्यंगुलीयकविशेषणमेतत् । ते-तव । अग्रहस्तः-हस्ताग्रमित्यर्थः ॥ हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदावितिवामनः ॥ कुसुमितः-पुष्पितइव । दृश्यतइतिशेषः ॥

---

द्वितीया ॥ हला कहिं पत्थिदासि ॥ छा ॥ हला कुत्र प्रस्थितासि ॥

---

द्वितीयेति ॥ द्वितीया । वदति । हला- सखि वकुलावलिके । कुत्र - क्व । प्रस्थितासि - यास्यसि ॥

---

प्रथमा ॥ देवीए वअणेण णट्टाआरिअं अज्जगणदासं पुच्छिदुं उवदेसग्गहणे कीरिसी मालविएत्ति ॥ छा ॥ देव्या वच

नेन नाट्याचार्यमार्यगणदासं प्रष्टुम्। उपदेशग्रहणे कीदृशी मा ळविकेति ॥

---

प्रथमेति ॥ प्रथमा । कथयति । हे कौमुदिके । देव्याः - धारिण्याः । वचनेन - आज्ञाया । उपदेशग्रहणे - नाट्यशिक्षाविषये । माळविका - एतन्नामिकाबालिका । कीदृशी- कथंवावर्ततइति । आर्यगणदासं - पूज्यंगणदासनामानम्। नाट्याचार्यं -तौर्यत्रिकोपदेष्टारं । प्रष्टुम् - पृच्छांकर्तुं। यास्यामी तिपूर्वेणानुषङ्गः ॥

---

द्वितीया ॥ सहि ! ईरिसेण वावारेण असण्णिहिदावि सा भट्टिणा कहं दिठ्ठा ॥ छा ॥ सखि ! ईदृशेन व्यापारेणासन्निहितापि सा भर्त्रा कथं दृष्टा ॥

---

द्वितीयेति ॥ द्वितीया । ब्रवीति । हे सखि - वकुलावळिके । ईदृशेन - एतादृशेन । व्यापारेण - नाट्यशिक्षारूपप्रयोजनेन । असन्निहिता- अनिकटस्थितापि । सा - माळविका । कथम् - केनवाप्रकारेण । भर्त्रा- राज्ञा । दृष्टा - विलोकिता । राज्ञो माळविकादर्शनोक्तिः प्रस्तुतकथाप्रसक्त्यर्था । इत्यूहनीयम् ॥

---

प्रथमा ॥ आं । सो जणो देवीए पासगदो चित्ते दिठ्ठो ॥ छा ॥ आं । सजनो देव्याः पार्श्वगत श्चित्रे दृष्टः ॥

---

प्रथमेति ॥ प्रथमा । वदति । कौमुदिके । आं - एवमेव । राज्ञोऽस्यादर्शनं दुर्लभमेवेत्यर्थः । तथापि । सजनः - माळविका । देव्याः- पट्टमहिष्याः । पार्श्वगतः - पक्षस्थितः । चित्रे - चित्रपटे । दृष्टः - आलोकितः । राज्ञेतिशेषः ॥

---

द्वितीया ॥ कहंविअ ॥ छा ॥ कथमिव ॥

---

द्वितीयेति ॥ द्वितीया । वदति । वकुलावलिके । कथमिव-केनवाप्रकारेण । तत्संभवतिस्मेतियोजना ॥

---

प्रथमा ॥ सुणाहि। चित्तसाळं गदा देवी जदा पच्चग्गवण्णराअं चित्तळेहं आआरिअस्स पळोअंती चिठ्ठदि। तहिं अंतरे भट्टा उवठ्ठिदो ॥ छा ॥ शृणु। चित्रशालां गता देवी यदा प्रत्यग्रवर्णरागां चित्रलेखा माचार्य स्यावलोकयन्ती तिष्ठति। तस्मि न्नन्तरे भर्तोपस्थितः ॥

---

प्रथमेति ॥ प्रथमा । वक्ति । सखिकौमुदिके । शृणु-आकर्णय। कथयिष्यामीतिशेषः । यदा-यस्मिन्समये । चित्रशालां-आलेख्यनिकेतनं ॥ नि ॥ आलेख्याश्चर्ययोश्चित्रमित्यमरः ॥ गता-प्राप्ता । देवी-धारिणी। प्रत्यग्रवर्णरागाम्-प्रत्यग्रः-अभिनवः । वर्णस्य-रञ्जनद्रव्यस्य। रागः-रञ्जनंयत्रतथाभूताम् । आचार्यस्य-गणदासस्य संबन्धिनीम्। चित्रलेखां-चित्रपटं। अवलोकयन्ती-पश्यन्तीसती। तिष्ठति-वर्तते। तस्मिन्नन्तरे-तत्समये। भर्ता-राजा। उपस्थितः-प्रविष्टः॥

---

द्वितीया ॥ तदो तदो ॥ छा ॥ तत स्ततः ॥

---

द्वितीयेति ॥ द्वितीया। ब्रूते । किमिति । वकुलावळिके। ततस्ततः-अनन्तरम्।किमभूदितिशेषः।उत्तरकथाश्रवणकौतुकवशा द्विरुक्तिः॥

---

प्रथमा ॥ उवआराणन्तरम् एक्कासणोवविट्ठेण भट्टिणा चित्तगणदाए देवीए परिघणमज्झगदम् आसण्णपरिआरिअं पेक्खिअ देवी पुच्छिदा ॥ छा ॥ उपचारानन्तर मेकास नोपविष्टेन भर्त्रा चित्रगतायां देव्याः परिजनमध्यगता मासन्नपरिचारिकां दृष्ट्वा देवी पृष्टा ॥

---

प्रथमेति ॥ प्रथमा। प्राह। कौमुदिके। उपचारानन्तरं - प्रविष्टस्यराज्ञःप्रत्युत्थानादि सत्कारोत्तरम्। एकासनोपविष्टेन - एकस्मिन्पीठेनिषण्णेन। देव्यासहेत्यविशेषः। भर्त्रा - राज्ञा। चित्रगतायाः - चित्रपटेलिखितायाः। देव्याः - पट्टमहिष्याः। परिजनमध्यगताम् - परिवारजनान्तरास्थिताम्। आसन्नपरिचारिकाम् - समीपेपरिचारिकावत् स्थितांबालिकां। दृष्ट्वा - विलोक्य। देवी - पट्टमहिषी धारिणी। पृष्टा - पृच्छयतेस्म॥

---

द्वितीया॥ किन्ति॥ छा॥ किमिति॥

---

द्वितीयेति॥ द्वितीया। कथयति। हे सखि। किमिति - केनप्रकारेण। राज्ञादेवीपृष्टेति पूर्ववाक्यानुषङ्गः॥

---

प्रथमा॥ अपुव्वा इअं दारिआ देवीए आसण्णा लिहिदा किण्णामहेएत्ति॥ छा॥ अपूर्वेयं दारिका देव्या आसन्ना लिखिता किन्नामधेयेति॥

---

प्रथमेति॥ प्रथमा। राज्ञःप्रश्नप्रकारंवदति। कौमुदिके। अपूर्वा - मयाकदापिनदृष्टा। देव्याः - चित्रगतायास्तवेत्यर्थः। आसन्ना लिखिता - निकटाचित्रिता॥ नि॥ समीपे निकटासन्न सन्निकृष्टसनीडवदित्यमरः॥ इयम् - एषा। दारिका - बालिका। किंनामधेया - कीदृशाभिधाना। इति - एवंप्रकारेण। पृष्टेतिपूर्वेणैवयोजना॥

---

द्वितीया॥ आकिदिविसेसे आअरो पदं करेदि। तदो तदो॥ छा॥ आकृतिविशेषे आदरः पदं करोति। ततस्ततः॥

---

द्वितीयेति॥ द्वितीयाब्रवीति। सखि। आदरः - प्रेमा। आकृतिविशेषे - अतिसुन्दराकारे। पदम् - स्थितिम्। करोति - विदधाति। मनोहराकृतिदर्शनेआदरोजायतइतिभावः। ततस्ततः - अनन्तरम्। कथमभु

इतिशेषः ॥

---

प्रथमा ॥ तदो अवहीरिअवअणो भट्टा संकिदो देवीं पुणोवि अणुबन्धिदुं पउत्तो । तदो कुमारीए वसुलच्छीए आअक्खिदं अज्ज एसा मालविएत्ति ॥ छा ॥ ततोऽ वधीरितवचनो भर्ता शंकितो देवीं पुनर प्यनुबन्धुं प्रवृत्तः । ततः कुमार्या वसुलक्ष्म्याऽऽ ख्याताम् । आर्य ! एषा माळविकेति ॥

---

प्रथमेति ॥ प्रथमा । वक्ति । कौमुदिके । ततः - अनन्तरम् । अवधीरितवचनः - अवधीरितम् - प्रत्युत्तरादानेननिराकृतम । वचनम् - उक्तिर्यस्यतथाभूतस्सन् । भर्ता - राजा । शंकितः - अस्यकेनवाकारणेन भवितव्यमिति संजातवितर्कस्सन् । देवीं - पट्टमहिषीं । पुनः - मुहुरपि । अनुबन्धुम् - प्रष्टुम् । प्रवृत्तः - उपक्रान्तवान् । ततः - तदुपरि । कुमार्या - बालिकया । वसुलक्ष्म्या - तदाख्ययापुत्रिकया । आख्यातम् - उदितं । किमिति । हे आर्य - जनक । एषा - चित्रफलके देवीपार्श्वस्थितादारिका । माळविका - एतन्नामधेयेति । आख्यानक्रिययाअनुषङ्गः ॥

---

द्वितीया ॥ सस्मितम् । सरिसंक्खु एदं बालभाअस्स । तदो अवरं कहेहि ॥ छा ॥ सदृशंखलु एत द्बालभावस्य । ततोऽपरं कथय ॥

---

द्वितीयेति ॥ द्वितीया । सस्मितं - समन्दहासं यथातथाकथयति । वकुलावळिके । एतत् - मर्मोद्घाटनम् । बालभावस्य - बालत्वस्य । सदृशंखलु - अनुरूपमेवहि । ततोऽपरं - तदुपरिकथां । कथय - वद ॥

---

प्रथमा ॥ किं अण्णं । संपदं मालविआ सविसेसं भट्टिणो दंसणपहादो रक्खीआदि ॥ छा ॥ किमन्यत् । साम्प्रतम् माळविका सविशेषं भर्तु र्दर्शनपथा द्रक्ष्यते ॥

---

प्रथमेति ॥ प्रथमा । प्राह । कौमुदिके । किमन्यत् - अतःपरं किंकथनीयमस्ति । साम्प्रतम् - इदानीं । भर्तुः - राज्ञः । दर्शनपथात् - विलोकनमार्गात् । सविशेषम् - अत्यन्तम् । माळविका - एतन्नामिकाबालिका । रक्ष्यते - गोप्यते । देव्येतिशेषः ॥ अपुव्वाइअंदारिआइत्यारभ्यदंसणपहादोरक्खीअदि - इत्यन्तेन वाक्यकदम्बकेन गम्यमानो माळविकागोचरो राज्ञो ऽभिलाषो ऽत्रनाटके बीजमित्यनुसंधेयम् ॥

---

द्वितीया ॥ हला अणुचिट्ठ अत्तणो णिओअं। अहंपि एदम् अंगुलीअअं देवीए उवणइस्सं ( इति निष्क्रान्ता ) ॥ छा ॥ हला अनुतिष्ठात्मनो नियोगम् । अहम प्येत दंगुळीयकं देव्यै उपनेष्यामि ॥

---

द्वितीयेति ॥ द्वितीया । ब्रूते । हला - सखि बकुलावळिके । आत्मनः - स्वस्याः । नियोगम् - माळविकापरीक्षणरूपंनिदेशम् । अनुतिष्ट - त्वंनिर्वर्तयस्व । अहमपि । देव्यै-पट्टमहिष्यै । एतत् - मत्करास्थितमिदम् । अंगुळीयकम् - नागमुद्रासनाथं करशाखाभरणम् ॥ नि ॥ अंगुळीयकमूर्मिका । अंगुल्यःकरशाखास्स्युरितिचामरः ॥ सू ॥ जिह्वामूलांगुळेश्छ इति छ प्रत्ययः । उपनेष्यामि - गमयिष्यामि दास्यामीत्यर्थः ॥व्या॥ णीञ्प्रापण इतिधातोर्लृट् ॥ इत्युक्त्वा । निष्क्रान्ता - निर्गता ॥

---

प्रथमा ॥ ( परिक्रम्यावलोक्यच ) एसो णट्टाआरिओ संगीदसाळादो णिग्गच्छदि । दाव से अत्ताणं दंसेमि । ( इति परिक्रामति ) छा ॥ एष नाट्याचार्यः संगीतशालातो निर्गच्छति तावदस्यात्मानम् दर्शयामि ॥

---

प्रथमेति ॥ प्रथमा । बकुलावळिका । परिक्रम्य - गत्वा । अवलोक्य - दृष्ट्वाच । आत्मन्येवाह । कथम् । एषः - अयं । नाट्याचार्यः - नृत्यविद्योपाध्यायः । सङ्गीतशालातः - लास्यगृहात् । निर्गच्छति - निष्क्रा

मति । तावत्-इदानीम् । अस्य - नाट्याचार्यस्य । आत्मानम्-स्वं । दश यामि - आलोकयामि ॥ इत्युक्त्वा । परिक्रामति - गच्छति । तत्समीपमि तिशेषः ॥

---

प्रविश्यगणदासः ॥ कामंखलु सर्वस्यापि कुलविद्या बहुमता नपुन रस्माकं नाट्यंप्रति मिथ्या गौरवम् । कुतः ॥ तथाहि ॥

श्लो ॥ देवाना मिद मामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं
रुद्रेणेद मुमाकृतव्यतिकरे स्वांगे विभक्तंद्विधा ।
त्रैगुण्योद्भव मत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्न रुचे र्जनस्य बहुधा प्येकं समाराधनं ॥४

---

प्रविश्येत्यादि ॥ गणदासः - एतन्नामनाट्याचार्यः । प्रविश्य- रङ्ग स्थलंप्राप्य । आत्मन्येवब्रूते । किमिति । सर्वस्य - सकलस्य जनस्यापि । कुलविद्या - स्ववंशानुक्रमागतविद्या । कामम् - अत्यन्तम् । बहुमताखलु - गौरवास्पदंहि । अस्माकंपुनः - नाट्यवेदिनामस्माकन्तु । नाट्यंप्रति-नृत्य विद्याविषये । मिथ्यागौरवम्-आरोपितबहुमानः । न - नविद्यते । परंतु स्वाभाविकमेव गौरवमस्तीत्यर्थः । कुतः- कस्मादितिचेत् । तथाहि-तद्युक्त मेवखलु । मुनयः - भरतादयः । सङ्गीतशास्त्रप्रवर्तकाइत्यर्थः । इदम् - नाट्यं । देवानाम् - इन्द्रादीनंसुराणां । कान्तम्- मनोहरं । चाक्षुषम् - चक्षुरिन्द्रि यानुभवयोग्यं । क्रतुम् - यागम् । आमनंति - वदन्ति । अस्य नाट्यस्यक्र तुत्वानिरूपणंतु चतुर्वेदसारभूतनाट्यवेदविहितकर्मत्वादिति ज्ञेयम् । तथाचो क्तंकुमारसम्भवे ॥ कर्मयज्ञःफलंस्वर्ग इति । अस्यचतुर्वेदसारत्वं भारतीये ॥ सर्वशास्त्रार्थसंपन्नं सर्वशीलप्रदर्शनम् । नाट्यसंज्ञमिमंवेदं सेतिहासंकरोम्यहं॥ एवंसंकल्प्य भगवान् सर्वान्वेदाननुस्मरन् । नाट्य वेदं तत श्चक्रे चतुर्वेदाङ्ग सम्भवम् ॥ जग्राहपाठ्य मृग्वेदा त्सामभ्यो गीतमेवच । यजुर्वेदा दभिनया न्रसा नाथर्वणादपि ॥ वेदोपवेदैः संबद्धो नाट्यवेदो महात्मना । एवं भगवता सृष्टो ब्रह्मणा ललितात्मना ॥ उत्पाद्य नाट्यवेदंतु ब्रह्मोवाच सुरेश्वरमिति ॥

प्रकारान्तरेणाप्यस्य क्रतुत्वमुक्तम् ॥ प्रयोगं यश्च कुर्वीत प्रेक्षते चावधानवान् । यागतिर्वेदविदुषां या गतिर्यज्वनामपि ॥ या गति र्दानशीलानां तां गतिं प्राप्नुयान्नर इति ॥ पुनः कीदृशम् । रुद्रेण- शशिशेखरेण । उमाकृतव्यतिकरे - उमया - पार्वत्या । कृतः - विहितः । व्यतिकरः - संबन्धः यस्य तस्मिन् । स्वाङ्गे - स्वदेहे । द्विधा- द्वैविध्येन । लास्यताण्डवरूपेणेत्यर्थः । इदम् - नाट्यम् । विभक्तम् - पृथक्कृतम् । तदुक्तं संगीतविद्याविनोदे ॥ उद्दण्डताण्डवमुदञ्चित लास्यलीलां कर्तुं स्वयं युगपदेव समुत्सुकात्मा । यः कामिनीकलितकम्रतरार्धकायस्सोयं विभाति विभुरादिनटस्सुराणामिति ॥ अत्र - नाट्ये । त्रैगुण्योद्भवं - त्रयोगुणाः - सत्त्वरजस्तमांस्येव त्रैगुण्यम् । चतुर्वर्गाश्रित्वा स्त्वर्थेष्यञ् । तस्मादुद्भवम् - जातं । लोकचरितं- लोकानाम् - लोकस्थितानां रामादीनामनुकार्याणां । चरितं - सुखदुःखमिश्रात्मकं चरित्रम् । नानारसम् - बहुविधप्रियतमोपभोग्य शृङ्गारादिरसं । दृश्यते - वीक्ष्यते । नाट्यम् - नृत्यम् । एकम् - एकविधमपि । भिन्नरुचेः - पृथग्भूतप्रीतियुक्तस्यापि । जनस्य - लोकस्य । बहुधा - शृङ्गारादिनानाप्रकारेण । समाराधनं - प्रीतिजनकं । भवतीतिशेषः ॥ तथाचोक्तं भारतीये ॥ त्रैलोक्यस्यास्य सर्वस्य नाट्यंभावानुकीर्तनम् । धर्माधर्मप्रवृत्तानां कामः कामोपसेविनां ॥ अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसां । नानाभावोपसंपन्नं नानावस्थान्तरात्मकम् ॥ लोकवृत्तानुकरणम् नाट्यमेतन्मयाकृतम् । एतद्रसेषु भावेषु सर्वकर्मक्रियासुच ॥ सर्वोपदेशजननम् नाट्यमेतद्भविष्यति । नतज्ज्ञानम् नतच्छीलं नसाविद्या नसाकला ॥ नासौयोगो नतत्कर्म नाट्येऽस्मिन्यन्नदृश्यतइति ॥

---

वकुला ॥ उपेत्य । अज्ज ! वन्दामि ॥ छ ॥ आर्य ! वन्दे ॥

---

वकुलावळिकेति ॥ वकुलावळिका । उपेत्य - निकटंप्राप्य । वदति । हे आर्य - पूज्य । वन्दे - प्रणमामि । अहमित्यध्याहारः ॥

---

गणदासः ॥ भद्रे ! चिरं जीव ॥

---

गणदासइति ॥ गणदासः । आशास्ते । हे भद्रे - कल्याणशीले । चिरं - चिरकालं । जीव - आयुष्मतीभव ॥

---

वकुला ॥ अज्जं देवी पुच्छदि । अवि उवदेसग्गहणे ण अदिकिलिस्सदि वो सिस्सा मालविएत्ति ॥ छा ॥ आर्यं देवीपृच्छति अप्युपदेश ग्रहणे नातिक्लिश्यति व शिष्या माळविकेति ॥

---

वकुलावळिकेति ॥ वकुलावळिका । प्राह । किमिति । देवी - पट्टमहिषी । आर्यं - पूज्यंत्वां । पृच्छति - प्रश्नंकरोति । कथमितिचेत् । वः - युष्माकं । शिष्या - छात्रा ॥ नि ॥ छात्रान्ते वासिनौ शिष्यइत्यमरः ॥ माळविका - एतन्नाम्नीबालिका । उपदेशग्रहणे - नाट्यविद्याध्ययने । नातिक्लिशयत्यपि - अतीवक्लेशंनददातिकिम् ॥

---

गणदासः ॥ भद्रे ! विज्ञाप्यतां देवी परमनिपुणा मेधाविनीचेति । किंबहुना ॥

श्लो ॥ यद्य त्प्रयोग विषये भाविक मुपदिश्यते मया तस्यै ।
तत्त द्विशेषकरणा त्प्रत्युपादिशतीव मे बाला ॥५॥

---

गणदासइति ॥ गणदासः । प्राह । हेभद्रे - शुभस्वभावे । माळविका । परमनिपुणा - अत्यन्तप्रवीणा । मेधाविनी - धीमतीचेति । देवी - पट्टमहिषीधारिणी । विज्ञाप्यतां - विशदीक्रियतां । त्वयेतिशेषः । बहुना - अधिकोक्तेन । किं - किंप्रयोजनं । यदिति ॥ मया । तस्यै - माळविकायै । भाविकं - शृङ्गारादिभावविशिष्टं । प्रयोगविषये - अभिनयेविषये । यद्यत् - नृत्यमित्यर्थः । उपदिश्यते - बोधयते । तत्तद्विशेषकरणात् - तस्य तस्यभावस्य विशेषेणातिशयेन करणा न्निर्वर्तनात् । बाला - दारिका । मे - मह्यम् ॥ व्या ॥ क्रियाग्रहणमपिकर्तव्यमितिचतुर्थी ॥ प्रत्युपादिशति - प्रतिबोधयतीव । दृश्यतइतिशेषः । अनेनमाळविकायाः प्रावीण्यातिशयो

गम्यते ॥

---

वकु ॥ आत्मगतम् । अदिक्कमंतींविअ इरावदीं पेक्खामि। प्रकाशम्। किदत्था दाणिं वो सिस्सा। जास्सिं गुरुअणो एव्वं तुस्सदि ॥ छा ॥ अतिक्रामन्तीमि वेरावतीं पश्यामि...कृता र्थेदानीं वश्शिष्या। यस्यां गुरुजन एवं तुष्यति ॥

---

वकुलावळिकेति ॥ वकुलावळिका। आत्मगतम् - स्वगतम्। वक्ति। इमां माळविकां। इरावतीं - एतन्नामकमप्सरोविशेषं। अतिक्रामन्तीं - अतिशयानामिव। पश्यामि - प्रेक्षे। तर्कयामीतिभावः। प्रकाशं - प्रकटंयथातथा। प्राह। इदानीं - अद्य। वः - युष्माकम्। शिष्या - बाला। कृतार्था - धन्या। यस्याम् - बालायां। गुरुजनः - आचार्यजनः। एवम् - इत्थम्। तुष्यति - प्रीणाति। अतोधन्येति पूर्वेणान्वयः ॥

---

गणदासः ॥ भद्रे ! तद्विधाना मसुलभत्वा त्पृच्छामि। कुतो देव्या तत्पात्र मानीतम् ॥

---

गणदासइति ॥ गणदासः। प्राह। हे भद्रे - मङ्गळस्वभावे। तद्विधानामसुलभत्वात् - तादृशानां पात्राणामत्यन्त दुर्लभत्वात्। पृच्छामि - प्रश्नंकरोमि। त्वामितिशेषः। देव्या - पट्टमहिष्या। तत् - प्रसिद्धं। पात्रम् - माळविकारूपंविशिष्टवस्तु ॥ नि ॥ योग्यभाजनयोः पात्रमित्यमरः ॥ कुतः - कस्मात्। आनीतम् - आहृतम्। कथयेति क्रियाध्याहारः ॥

---

वकुला ॥ अत्थि देवीए वण्णावरो भादा वीरसेनो णाम। सो भट्टिणा अंतवालदुग्गे णम्मदातीरे ठाविदो। तेण सिप्पाहिआरे जोग्गा इअं दारिएत्ति बहिणीए देवीए उवाअणं पेसिदा ॥ छा ॥ अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम। स

भर्त्रा ऽन्तपालदुर्गे नर्मदातीरे स्थापितः। तेन शिल्पाधिकारे यो ग्येयं दारिकेति भगिन्या देव्या उपायनं प्रेषिता॥

---

वकुलावळिकेति॥ वकुलावळिका। कथयति। देव्याः - पट्टमहिष्याः। वीरसेनोनाम - वीरसेनाभिधानः। वर्णावरः - वर्णेन - कुलेन। अवरः - किञ्चिन्न्यूनः॥ सू॥ पूर्वसदृशसमोनार्थेत्यादिना तृतीयासमासः। भ्राता - सहजः। अस्ति - विद्यते। सः - वीरसेनः। नर्मदातीरे - नर्मदाख्यनदीतटे। स्थितइतिशेषः। अन्तपालदुर्गे - अन्तपालाख्यप्राकारे। भर्त्रा - राज्ञा। स्थापितः - नियोजितः। तेन - वीरसेनेन। इयं - माळविकाख्या। दारिका - बालिका। शिल्पाधिकारे - नाट्यविद्याग्रहणे। योग्या - अर्हा। इति - एवंमत्वा। भगिन्याः - स्वसुः। देव्याः - पट्टमहिष्याः। उपायनम् - पारितोषिकं। प्रेषिता - प्रहिता॥

---

गण॥ स्वगतम्॥ आकृतिविशेषप्रत्ययादेना मनूनवस्तुकां सम्भावयामि। प्रकाशम्॥ भद्रे! मयापि यशस्विना भवितव्यम्। यतः॥

श्लो॥ पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्प माधातुः।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य॥ ६॥

---

गणदासइति॥ गणदासः। स्वगतम् - आत्मगतम्। ब्रूते। आकृतिविशेषप्रत्ययात् - आकृतौ - रूपे। योविशेषः - यादृशोऽतिशयः। तस्यप्रत्ययः - ज्ञानं। तस्माद्धेतोः। एनां - माळविकाम्। अनूनवस्तुकाम् - अधिकतमवृत्ताम्। सम्भावयामि - तर्कयामि। प्रकाशम् - प्रकटंयथातथा। प्राह। हेभद्रे - वकुलावळिके। मयापि। यशस्विना - कीर्तिमता भवितव्यं - भाव्यं॥ सू॥ तयोरेवकृत्यक्तखलर्थाइति भावेतव्यप्रत्ययः। यतः - यस्मात्। पात्रविशेषइति॥ आधातुः - उपदेष्टुः। शिल्पं - विद्या। पात्रविशेषे - योग्यपात्रे। न्यस्तं - निहितंसत्। पयोदस्य - जलदस्य। ज

लम् - नीरं। समुद्रशुक्तौ- वारिधिस्थशुक्तौ। न्यस्तंसदित्यत्राप्यनुषज्यते। मुक्ताफलताम् - मौक्तिकत्वमिव। गुणान्तरम् - गुणोत्कर्षं। व्रजति - प्राप्नोति। तस्मादहमपि यशस्वीभवामीत्यर्थः॥

---

वकुला ॥ अज्ज! कहिं दाणिं वो सिस्सा ॥ छा ॥ आर्य! कु त्रेदानीं व शिष्या ॥

---

वकुलावळिकेति॥ वकुलावळिका। पृच्छति। हेआर्य - गणदास। वः - युष्माकं। शिष्या - माळविका। इदानीम् - अद्य। कुत्र - कस्मिन्प्रदेशे। तिष्ठतीतिशेषः॥

---

गण ॥ इदानीमेव पंचांगादिक मभिनय मुपदिश्य मया विश्रम्यतामि त्याभिहिता दीर्घिकावलोकनगवाक्षगता प्रवात मासेवमाना तिष्ठति ॥

---

गणदासइति॥ गणदासः। ब्रवीति। मया। इदानीं - संप्रत्येव। पञ्चाङ्गादिकम् - पञ्चअङ्गानि - चित्तादीनियस्य स आदिर्यस्यतं। पञ्चाङ्गादिकं। अभिनयं - व्यञ्जकम्। अर्थबोधकहस्त विन्यासादिकामिति यावत्। अभिनयस्य पञ्चाङ्गत्वमुक्तंदर्पणे॥ चित्ताक्षिभ्रूहस्तपादै रङ्गैश्चेष्टादिसाम्यतः। पात्राद्यवस्थाकरणं पञ्चाङ्गो ऽभिनयोमतइति॥ आदिपदेन, भवेदभिनयो ऽवस्थानुकारस्स चतुर्विधः। आङ्गिकोवाचिकश्चैवमाहार्य सात्विकस्तथेति॥ उपदिश्य - प्रबोध्य। विश्रम्यताम् - आश्वस्यताम्। इति - एवम्। अभिहिता - उक्तासती। दीर्घिकावलोकनगवाक्षगता - वापीदर्शननिमित्तवातायनस्थिता। प्रवातम् - प्रकृष्टमारुतम्। आसेवमाना- भजमाना। तिष्ठति - वर्तते॥

---

वकुला ॥ तेणहि अणुजाणादु मं अज्जो जाव से अज्ज

परितोसणिवेदणेण उस्साहं वड्ढेमि ॥छा॥ तेन ह्यनुजानातु मामार्यः। यावदस्या आर्यपरितोषनिवेदने नोत्साहं वर्धयामि॥

---

वकुलावळिकेति॥ वकुलावळिका। वदति। तेनहि - तेनहेतुना। आर्यः - पूज्यः। मांप्रति। अनुजानातु - अनुज्ञांददातु। आर्यपरितोषनिवेदनेन - आर्यस्य - पूज्यस्य। तत्र। परितोषनिवेदनेन - माळविकाविद्याविषये संतोषज्ञापनेन। अस्याः - देव्याः। उत्साहं - कौतुकं। यावद्वर्धयामि - वृद्धिंनेष्यामि ॥ सू ॥ यावत्पुरा निपातयोर्लडिति भविष्यदर्थेलट्॥

---

गण॥ दृश्यतां सखी। अहमपि लब्धक्षणः स्वगेहं गच्छामि॥

---

गणदासइति॥ गणदासः। प्राह। सखी - ते मित्रभूतामाळविका। दृश्यताम् - अपेक्ष्यतां। त्वयेतिशेषः। अहमपि। लब्धक्षणः - विश्रमार्थप्राप्तावसरः। स्वगेहम् - आत्मीयनिकेतनंप्रति। गच्छामि - गमिष्यामि॥

---

इति निष्क्रान्तौ॥

---

इतीति॥ इत्युक्त्वा। निष्क्रान्तौ - निर्गतौ। वकुलावळिकागणदासावितिशेषः॥

---

इति मिश्रविष्कम्भकः॥

---

मिश्रविष्कम्भकः - एतन्नामकनाटकाङ्गम्। इति - समाप्तः॥ मिश्रविष्कम्भलक्षणंतु॥ शुद्धस्स्यात्सतुसंकीर्णोनीचमध्य प्रयोजितइतिदर्पणोक्तंज्ञेयम्॥

( ततःप्रविशत्येकान्तस्थित परिजनोमन्त्रिणालेखहस्तेना न्वास्यमानोराजा ॥ )

ततइति ॥ ततः - अनन्तरम् । एकान्तस्थितपरिजनः - नियतपरिजनसहितः । लेखहस्तेनमन्त्रिणा - करस्थितपत्रिकेणामात्येन । अन्वास्यमानः - उपास्यमानः । राजा - नृपः । प्रविशति - रङ्गस्थलंप्राप्नोति ॥

राजा ॥ अनुवाचितलेखममात्यंविलोक्य । वाहतक ! किं प्रतिपद्यते वैदर्भः ॥

राजेति ॥ राजा - भूपः। अनुवाचितलेखम् - अनूदितपत्रिकम्। अमात्यं - मन्त्रिणं । विलोक्य - वीक्ष्य । प्राह ॥ हे वाहतक - वाहतकनामकसचिव । वैदर्भः - विदर्भदेशाधीशः । किं प्रतिपद्यते - किंवामन्यते ॥

अमात्यः ॥ देव ! आत्मविनाशम् ॥

अमात्यइति ॥ अमात्यः - सचिवः । ब्रूते । हे देव - राजन् । आत्मविनाशम् - स्वस्याश्रेयः । प्रतिपद्यतइत्यनुषज्यते ॥

राजा ॥ निदेश मिदानीं ज्ञातु मिच्छामि ॥

राजेति ॥ राजा - अग्निमित्रः । प्राह । अमात्य । इदानीं - संप्रति । निदेशं - निश्चयं । वैदर्भस्येतिशेषः । ज्ञातुं - साकल्येनवेदितुम् । इच्छामि - वाञ्छामि ॥

अमात्यः ॥ इद मिदानीं मनेन प्रतिलिखितम् । पूज्ये नाह मा

दिष्टः। पितृव्यपुत्रो भवतः कुमारो माधवसेनः प्रतिश्रुतसंबंधो ममोपान्तिक मुपसर्प न्नन्तरा त्वदीये नान्तपाले नावस्कन्द्य गृहीतः स त्वया मदपेक्षया सकळत्रसोदर्यो मोचयितव्य इति। तत्र वो नविदितं यत्तुल्याभिजनेषु भूमिधरेषु राज्ञां वृत्तिः। अतोऽत्र मध्यस्थः पूज्यो भवितु मर्हति। सोदरापुन रस्य ग्रहणविप्लवे विनष्टा। तदन्वेषणाय यतिष्ये। अथावश्यमेव माधवसेनो मया पूज्येन मोचयितव्यः। श्रूयता मभिसन्धिः॥

श्लो॥ आर्यसचिवं विमुञ्चति यदि पूज्य स्संयतं मम स्यालम्।
मोक्ता माधवसेन स्ततोमया बन्धना त्सद्य इति ॥७॥

---

अमात्यइति॥ अमात्यः -वाहतकः। कथयति। किमिति। हे राजन्। अनेन -वैदर्भेण। इदानीं - अधुना। इदं - वक्ष्यमाणम्। प्रतिलिखितं - प्रत्युत्तरत्वेनलिखितं। तदाह। पूज्येन - तत्रभवतात्वया। अहम्। आदिष्टः - आज्ञप्तः। कथं। भवतः - तव। वैदर्भस्येत्यर्थः। पितृव्यपुत्रः - पितृभ्रातृसुतः॥ नि॥ पितुर्भ्राता पितृव्यस्स्या दित्यमरः॥ कुमारः - युवराजः। माधवसेनः। प्रतिश्रुतसम्बन्धः - प्रतिज्ञातवैवाहिकसम्बन्धस्सन्। मम - अग्निमित्रस्य। उपांतिकं - समीपम्। उपसर्पन् - आगच्छन्। अन्तरा - अंतरे। पथिमध्य इत्यर्थः। त्वदीयेन - त्वत्सम्बान्धिना। अन्तपालेन - सीमान्तरक्षकेण। अवस्कन्द्य - निरुध्य। गृहीतः - ग्राहितः। त्वया - वैदर्भेणेत्यर्थः। सः - माधवसेनः। मदपेक्षया - मदाशयानुसारेण। सकळत्रसोदर्यः - जायासोदर्याभ्यांसहितस्सन्। मोचयितव्यः - मोक्षणीयः। इति - एवं। अहमादिष्टइतिपूर्वेण सम्बन्धः। एवमग्निमित्र पत्र मनूद्यप्रत्युत्तयरति। तत्रेत्यादि॥ तत्र - तस्मिन्विषये। वः - युष्माकम्। नाविदितं - नज्ञातमितिकाकुः। यत्। तुल्याभिजनेषु - समानवंशेषु। भूमिधरेषु - भूपालेषु। राज्ञाम् - नृपाणाम्। वृत्तिः - वर्तनम्।

अतः - अस्माद्धेतोः । अत्र - अस्मिन्विषये । पूज्यः - आर्यो ऽग्निमित्रः । मध्यस्थः - उभयोस्समानः । भवितुम् - स्थातुं । अर्हति - योग्योभवति । अस्य - माधवसेनस्य । सोदरापुनः - भगिनीतु । ग्रहणविप्लवे - माधवसेनस्यग्रहणोपद्रवे । विनष्टा - अदर्शनंप्राप्ता । तदन्वेषणाय - तस्याः - माधवसेनस्यभगिन्याः । अन्वेषणाय - विचयनाय । यतिष्ये - यत्नंकरिष्ये । अथ - तथानोचेत् । माधवसेनः - एतन्नामास्मत्प्रतिपक्षः । पूज्येन - तत्रभवतात्वया । मया - वैदर्भेणेत्यर्थः । अवशयम - अत्यन्तमेव । मोचयितव्यः - मोक्षणीयोयदि । अभिसंधिः - निश्चयः । श्रूयताम् - आकर्ण्यताम् । त्वयेतिशेषः । आर्येति ॥ पूज्यः - आर्योभवान् । संयतम् - इतःपूर्वं भवताग्निमित्रेणबद्धं । मम । स्यालं - पत्नीभ्रातरम् । आर्यसचिवं-पूज्यमंत्रिणम् । मौर्यसचिवमितिपाठे मौर्याख्यवंसचिवम् । मुञ्चतियदि - त्यजतिचेत् । ततः - तर्हि । मया । सद्यः - तत्क्षणमेव । माधवसेनः । बन्धनात् - निरोधात् । मोक्ता - मोक्षयते । कर्मणिलुट् । इति - इत्थम् । अभिसन्धिः ॥

---

राजा ॥ (सरोषम्) कथं कार्यविनिमयेन मयि व्यवहरत्यनात्मज्ञः । वाहतक ! प्रकृत्यमित्रः प्रतिकूलकारीच मे वैदर्भः । त द्यातव्यपक्षे स्थितस्य पूर्वसंकल्पित समुन्मूलनाय वीरसेनमुखं दण्डचक्र माज्ञापय ॥

---

राजेति ॥ राजा - अग्निमित्रः । सरोषम् - सक्रोधंयथातथा । प्राह । कथं - केनप्रकारेण । अनात्मज्ञः - आत्मसामर्थ्यानभिज्ञः । वैदर्भः । मयिविषये । कार्यविनिमयेन - कार्यव्यत्यासेन । व्यवहरति - व्यापारं करोति । हे वाहतक । वैदर्भः - विदर्भराजः । मे - मम । प्रकृत्यमित्रः - प्रकृत्या - स्वभावेन । अमित्रः - अहितः । सहजशत्रुरित्यर्थः । प्रकृत्यमित्रत्वंच विषयानन्तरत्वादिति वेदितव्यम । प्रतिकूलकारी - विरुद्धाचरणशीलश्च । तत्तस्मात् । यातव्यपक्षे - अभियानयोग्यस्थाने । स्थितस्य वैदर्भ

स्य। पूर्वसंकल्पितसमुन्मूलनाय -आदौनिश्चितसमुद्धरणाय। वीरसेनमुखं-वीरसेननामक सेनापतिप्रधानं। दण्डचक्रम् - दण्डसैन्यम्। आज्ञापय - नियोजय॥

---

अमात्यः॥ य दाज्ञापयति देवः॥

---

अमात्यइति॥ अमात्यः - मन्त्रीवक्ति। देवः - राजा। यदाज्ञापयति - यन्नियुंक्ते। तत्करोमीतिवाक्यशेषः॥

---

राजा॥ अथवा किं भवा न्मन्यते॥

---

राजेति॥ राजा। ब्रूते - अथवा - तथानचेत्। भवान्। किं-किंवाकर्तव्यमिति। मन्यते - इच्छति॥

---

अमात्यः॥ शास्त्रदृष्ट माह देवः॥

श्लो॥ अचिराधिष्ठितराज्य श्शत्रुः प्रकृति ष्वरूढमूलत्वात्।
नवसंरोपणशिथिल स्तरुरिव सुकर स्समुद्धर्तुम्॥८॥

---

अमात्यइति॥ अमात्यः - मन्त्रीवाहतकः। कथयति। देवः - राजा। शास्त्रदृष्टम् - नीतिशास्त्रकथितप्रकारमेव। आह - वदति॥ सू॥ ब्रुवःपञ्चानामित्यादिनातिपेणलुट्रवश्चाहादेशः॥ अचिरेति॥ प्रकृतिषु - प्रजादिषु। अचिराधिष्ठितराज्यः - अचिरेण - स्वल्पकालेनैव। अधिष्ठितराज्यः - प्राप्तराज्याधिकारः। शत्रुः - रिपुः। अरूढमूलत्वात् - अदृढमूलत्वाद्धेतोः। नवसंरोपणशिथिलः - नवसंरोपणेन - नूतनसंस्थापनेन। शिथिलः - श्लथमूलः। तरुः - वृक्षइव। समुद्धर्तुं - उन्मूलयितुं। सुकरः - सुलभः॥

---

राजा॥ तेन ह्यवितथं तन्त्रकारवचनम्। इदमेव निमित्त

मादाय समुद्योज्यतां सेनापतिः ॥

---

राजेति ॥ राजा-नृपः । प्राह । किमिति । तेन-हेतुना । तन्त्रकारवचनम्- अर्थशास्त्रकारवाक्यम् । अवितथंहि-सत्यमेव । भविष्यतीतिशेषः ॥ नि ॥ हिहेताववधारणइत्यमरः ॥ इदं-कार्यविनिमयरूपमेवत्रचनम् । निमित्तम्-कारणम् । आदाय-अवलम्ब्य । सेनापतिः-सैन्याधिपोवीरसेनः । समुद्योजयताम्-शत्रुजयायप्रवर्त्यताम् ॥

---

अमात्यः॥ तथा। (इति निष्क्रान्तः॥ परिजनो यथाव्यापारं राजानमभित स्स्थितः॥)

---

अमात्यइति ॥ अमात्यः-सचिवः । तथा-तेनप्रकारेण-करोमीतिशेषः । इति-एवमुक्त्वा । निष्क्रान्तः-यातः । परिजनः-परिवारः । यथाव्यापारम्-स्वस्वनियतव्यापारेषु । राजानमभितः-राज्ञःसर्वप्रदेशेषु । स्थितः-निविष्टः ॥

---

प्रविश्यविदूषकः॥ आणत्तोम्हि तत्तभवदा रण्णा। गोदम! चिन्तेहिदाव उवाअं, जह मे जदिच्छा दिट्ठपडिकिदी मालविआ पच्चक्खदंसणा होदित्ति। मएअ तं तहा किदं दाव से णिवेदेमि॥ (इतिपरिक्रामति) छा॥ आज्ञप्तोऽस्मि। तत्रभवता राज्ञा। गौतम! चिन्तयताव दुपायं, यथा मे यदृच्छादृष्टप्रतिकृति माळविका प्रत्यक्षदर्शना भवतीति। मयाच त त्तथा कृतं ताव दस्य निवेदयामि॥

---

प्रविश्येत्यादि ॥ विदूषकः-नर्मसचिवप्रायोनटः। प्रविश्य-रङ्गस्थलंप्राप्य । ब्रवीति ॥ किमिति । हे गौतम-एतन्नामकविदूषक । त्वं। तावत्-तथा । उपायम्-साधनम् । चिन्तय-आलोचय। यथा-येनप्र

7

कारेण। यदृच्छादृष्टप्रतिकृतिः - अप्रयत्न प्रेक्षितप्रतिरूपदर्शना। माळविका - एतन्नामिकाबालिका। मे - मम। प्रत्यक्षदर्शना - चाक्षुषप्रदर्शना। भवति - स्पष्टार्थः। इति - एवं। तत्रभवता - पूजयेन। राज्ञा - क्षितिपालेनाग्निमित्रेण। आज्ञप्तः - नियोजितोऽस्मि। तथा - तेनप्रकारेण। तत् - कार्यंच। मया। कृतम् - अनुष्ठितं। तावत् - इदानीं। अस्मै - राज्ञे। निवेदयामि - विज्ञापयामि। इति - एवमुक्त्वा। परिक्रामति - राजनिकटं गच्छति॥ — अत्र गम्यमानं राज्ञो माळविकादर्शनौ त्सुक्यमारम्भोनाम प्रथमावस्थेति ज्ञेयम्। बीजारम्भयो स्समन्वया न्मुखसन्धि रित्यनुसन्धेयम्॥

---

राजा॥ विदूषकंदृष्ट्वा। अथ मपरः कार्यान्तरसचि वोऽस्मा नुपस्थितः॥

---

राजेति॥ राजा - क्षितिपतिः। विदूषकम् - एतन्नामकंनर्टं। दृष्ट्वा - वीक्षय। प्राह। कार्यांतरसचिवः - प्रयोजनांतरसहकारी। अयम् - एषपुरुषः। अपरः - पूर्वस्मादन्यः। अस्मान्। उपस्थितः - प्राप्तः॥

---

विदू॥ उपगम्य। वड्ढदु भवं॥ छा॥ वर्धतां भवान्॥

---

विदूषकइति॥ विदूषकः। उपगम्य - राजनिकटंप्राप्य। ब्रूते। राजन्। भवान्। वर्धताम् - अभ्युदयंप्राप्नोतु॥ सू॥ शेषे प्रथमइति प्रथमपुरुषः। शेषश्चायंभवच्छब्दो युष्मदस्मद्व्यतिरेकात्॥

---

राजा॥ सशिरःकम्पम्। इत आस्यताम्॥ विदूषकउपविष्टः॥

---

राजेति॥ राजा - अग्निमित्रः। सशिरःकम्पम् - आह्लादव्यंजकमूर्धसंचलनयुक्तं। प्राह। गौतम। इतः - अत्र। अस्यताम् - उपविशाच तां त्वयेतिशेषः। भावेलोट्॥ अथ। विदूषकः। उपविष्टः - निषण्णः॥

राजा ॥ कच्चि दुपायोपेयदर्शने व्यापृतं ते प्रज्ञाचक्षुः ॥

---

राजेति ॥ राजा - वसुधाधिपः । ब्रवीति । विदूषक । उपायोपेयदर्शने-उपायेन-साधनेन । उपेयस्य - बालिकाप्रत्यक्षदर्शनरूपसाध्यस्य । दर्शने - वेदने । ते - तव । प्रज्ञाचक्षुः - प्रतिभादृष्टिः । व्यापृतंकच्चित् - प्रसृतंकिं ॥ अत्र गम्यमानस्य माळविकारूपबीजस्य विन्यासा दुपक्षेपो नाम सन्ध्यङ्गमुक्तंभवति ॥

---

विदू ॥ पओअसिद्धिं पुच्छ ॥ छा ॥ प्रयोगसिद्धिं पृच्छ ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । राजन् । प्रयोगसिद्धिं - प्रयुज्यते उपायोऽस्मैइतिप्रयोगः - फलम् । तस्य । सिद्धिं - निष्पत्तिं । माळविकादर्शनसिद्धिमित्यर्थः । पृच्छ- अनुयुङ्क्ष्व । किमुपायचिन्तनप्रश्नेनेतिभावः ॥

---

राजा ॥ कथमिव ॥

---

राजेति ॥ राजा - क्षितिपतिः । पृच्छति । गौतम । कथमिव । केनप्रकारेण । फलसिद्धिर्भवतीति वाक्यशेषः ॥

---

विदू ॥ कण्णे । एव्वंविअ । (इत्यावेदयति) छा ॥ एवमिव ॥

---

विदूषकइति ॥ विदूषकः । कर्णे- श्रोत्रे । एवमिव - इत्थंकृतं । इति - एवम् । आवेदयति - विज्ञापयति । एतद्वचनं व्यापारान्तरभेद्यस्यं नियतस्य गुह्यतरार्थस्य प्रयोगेकविना प्रयुक्तम् । तथोक्तम् ॥ कर्णे एवमिवेत्युक्त्वा ज्ञाप्यःपथा स्वसङ्गत इति व्यावहारिकतन्त्रे ॥

---

राजा ॥ साधु वयस्य ! निपुण मुपक्रान्तम्, इदानीं दुरधिगमसिद्धाव प्यस्मि न्नारम्भे वयं त्वाशंसामहे । कुतः ॥

श्लो ॥ सप्रतिबन्धं कार्यं प्रभु रधिगन्तुं सहायवानेव ।
दृश्यं तमसि नपश्यति दीपेन विना सचक्षुरपि ॥९॥

---

राजेति ॥ राजा - भूपः । कथयति । वयस्य - सखे । साधु-सम्यगेव । निपुणं - चतुरंयथातथा । उपक्रान्तम्-आरब्धम् । त्वयेतिशेषः । इदानीं - अद्य । अस्मिन् - एतस्मिन् । आरम्भे - माळविकादर्शनोद्योगे । दुरधिगमसिद्धौ-दुष्प्रापफलावाप्तौसत्यपि । वयम् । आशंसामहे - फलसिद्धिमिच्छामः । कुतः - कस्मादितिचेत् । सप्रतिबन्धमिति ॥ सप्रतिबन्धं-प्रतिबन्धसहितं । कार्यं- प्रयोजनं । सहायवानेव - सहायसम्पन्नएवजनः । अधिगन्तुं - लब्धुं । प्रभुः - समर्थः । भवतीतिशेषः ॥ अस्मिन्नर्थे दृष्टान्तमाह । दृश्यमिति ॥ तमसि - अन्धकारे । सचक्षुः - चक्षुस्सहितोऽपि । दीपेन - प्रदीपेनविना । दृश्यं - प्रेक्षणीयंवस्तु । नपश्यति-नावलोकयति॥ —इदानी मित्यादिना सहायवानेवे त्यन्तेन तस्यबीजस्य बहुळीकरणा त्परिकर इति सन्धयङ्गमुक्तंभवति ॥

---

नेपथ्ये ॥ अलमलं बहुविकत्थ्य । राज्ञ स्समक्ष मे वावयो रधरोत्तरयो र्व्यक्ति र्भविष्यति ॥

---

नेपथ्यइति ॥ नेपथ्ये - तिरस्करिण्यन्तरितस्थाने । अलमल मित्यादि तीव्रसंभाषणं इतरेतरंजातं । बहु - अतीव । विकत्थ्य- आत्मश्लाघनं कृत्वा । अलमलम् - अलमितिप्रतिषेधे ॥ नि ॥ अलंभूषणपर्याप्ति शक्ति वारणवाचक मित्यमरः ॥ सू ॥ अलंखल्वो रित्यादिना क्त्वाप्रत्ययः । तस्यसमासेल्यप् ॥ वीप्सायांद्विरुक्तिः । आवयोः - तवममचेत्यर्थः । अधरोत्तरयोः- न्यूनत्वाधिकत्वयोः । व्यक्तिः - विवेचनं । राज्ञः - नृपस्य । समक्षं-सन्निधानएव । भविष्यति - संपत्स्यते ॥

---

राजा ॥ आकर्ण्य । सखे ! त्वत्सुनीतिपादपस्य पुष्प मुद्भिन्न मिदम् ॥

राजेति ॥ राजा - धराधिपः । आकर्ण्य - नेपथ्यभाषितंश्रुत्वा । प्राह । सखे - वयस्य । त्वद्धुनीतिपादपस्य - तवसुनयवृक्षस्य । इदम् - आकर्ण्यमानम् । पुष्पम् - सुमम् । उद्भिन्नम् - जातम् ॥

विदू ॥ फळंवि अइरेण देक्खिस्ससि ॥ छा ॥ फलम प्य चिरेण द्रक्ष्यसि ॥

विदूषकइति ॥ विदूषकः । वक्ति । राजन् । अचिरेण - सत्वरम् । फलं - फलरूपांकार्यसिद्धिमपि । द्रक्ष्यसि - प्रेक्षिष्यसे ॥— अत्र बीजस्य दृढीकरणात् परिन्यासोनाम सन्धयङ्गमुक्तंभवति ॥

ततःप्रविशति कञ्चुकी ॥

ततइति ॥ ततः - अनन्तरम् । कञ्चुकी - सौविदल्लः । अंतःपुरदौवारिकइत्यर्थः । प्रविशति - प्राप्नोति ॥

कञ्चुकी ॥ देव ! अमात्यो विज्ञापयति अनुष्ठिता प्रभो राज्ञेति । एतौपुन हरदत्त गणदासौ ॥

श्लो ॥ उभा वभिनयाचार्यौ परस्पर जयैषिणौ ।
त्वां द्रष्टु मुद्यतौ साक्षा द्भावाविव शरीरिणौ ॥ १० ॥

कञ्चुकीति ॥ कञ्चुकी-वक्ति । देव - हेप्रभो । प्रभोः -महाराजस्य । आज्ञा - सेनापतिसमुद्योजनरूपं शासनम् । अनुष्ठिता - निष्पादिता । इति - एवम् । अमात्यः - वाहतकाखयस्सचिवः । विज्ञापयति-निवेदयति । किंच । एतौ - द्वारस्थौ । उभौ - द्वौ । अभिनयाचार्यौ - तौर्यत्रिकोपदेष्टारौ । हरदत्तगणदासौपुनः - एतन्नामकौ नृत्यकुशलौतु । परस्परजयैषिणौ - अन्योन्यंजेतुमिच्छन्तौ । शरीरिणौ - मूर्तिमन्तौ । साक्षा

श्रावौ - प्रत्यक्षमत्यभिनयाविव । त्वां - भवन्तं । द्रष्टुं - प्रेक्षितुम् । उद्यतौ- उद्युक्तौ ॥

---

राजा ॥ प्रवेशय तौ ॥

---

राजेति ॥ राजा - नृपः । प्राह । कञ्चुकिन् । तौ - उभौ । प्रवेशय - प्रापय ॥

---

कञ्चु ॥ य दाज्ञापयति देवः ॥ (इति निष्क्रम्य ताभ्यां सह प्रविष्टः ॥

---

कञ्चुकीति ॥ कञ्चुकी । ब्रवीति । देवः - राजा । यदाज्ञापयति - यन्नियोजयति । तत्तथाकरोमीतिवाक्यशेषः । इति -एवमुक्त्वा । निष्क्रम्य - निर्गत्य । ताभ्यांसह - नाट्याचार्याभ्यांसाकं । प्रविष्टः - राजनिकटंप्राप्तः ॥

---

कञ्चु ॥ इतइतो भवन्तौ ॥

---

कञ्चुकीति ॥ कञ्चुकी । वक्ति । भवन्तौ । इतइतः - इमंप्रदेशंप्रति । आगच्छतामितिशेषः ॥

---

गण ॥ ( राजानं विलोक्य ) अहो दुरासदो राजमहिमा ।

श्लो ॥ नच नपरिचितो नचा प्यरम्य
श्चकित मुपैमि तथापि पार्श्व मस्य ।
सलिलनिधिरिव प्रतिक्षणं मे
भवति सएव नवोनवोऽय मक्ष्णोः ॥ ११ ॥

---

गणदासइति ॥ गणदासः । राजानं- धराधिपं । विलोक्य - वी

क्षय । प्राह । किमिति । राजमहिमा -राज्ञोमहत्त्वं । दुरासदः - दुर्धर्षः । अहो - आश्चर्यम् । तथाहि । नचेति ॥ अयंराजा । परिचितः - संस्तुत श्र । नभवतीतिन । किंतुपरिचितएवेत्यर्थः । अयम् । अरम्यः -असौम्योऽपि । न - नभवति । किंतुसौम्यएव । तथापि - तदपि । अस्य - राज्ञः । पार्श्वं - समीपं । चकितं -सभयंयथातथा । उपैमि - प्राप्नोमि । मे-मम । अक्ष्णोः - नेत्रयोः । प्रतिक्षणम् - सन्ततम् । वीप्सायामव्ययीभावः । सः- तादृशएव । अयम् - नृपः । सलिलनिधिः - समुद्रइव । नवोनवः - अभिनवप्रकारः । भवति ॥

---

हरदत्तः ॥ महत्खलु पुरुषाकार मिदं ज्योतिः । तथाहि ॥

श्लो ॥ द्वारे नियुक्तपुरुषाभिमतप्रवेश
स्सिंहासनान्तिकचरेण स होपसर्पन् ।
तेजोभि रस्य विनिवर्तितदृष्टिपातै
र्वाक्याद‍ृते पुनरिव प्रतिवारितोऽस्मि ॥१२॥

---

हरदत्तइति ॥ हरदत्तः - एतन्नामकद्वितीय नाट्याचार्यः । वक्ति । किमिति । इदं - एतत्पुरोदृश्यमानम् । पुरुषाकारम् - नराकृति । महत् - सर्वोत्कृष्टं । ज्योतिःखलु - तेजोहि । तथाहि - युक्तमेवखलु ॥ द्वारइति ॥ द्वारेनियुक्तपुरुषाभिमतप्रवेशः - द्वारेनियुक्तपुरुषेण - दौवारिकेण । अभिमतप्रवेशः - अङ्गीकृताभ्यन्तरगमनोपि । सिंहासनांतिकचरेण - राजासन निकटस्थपरिचारकेणसह । उपसर्पन् - समीपंगच्छन्नपि । विनिवर्तितदृष्टिपातैः- राजमुखंभीष्ममिति श्रुतिप्रामाण्यात् निवारित दृक्प्रसारैः । अस्य- राज्ञः । तेजोभिःपुनः - प्रकाशविशेषैस्तु । वाक्याद‍ृते-प्रतिषेधवाक्यंविनापि ॥ निः पृथग्विनान्तरेणर्ते इत्यमरः ॥ सू ॥ तद्योगेअन्याराद्दित्यादिनापञ्चमी ॥ अहं प्रतिवारितः - निरुद्धइव । अस्मि - भवामि ॥

---

कञ्चु ॥ एष देवः, उपसर्पतां भवन्तौ ॥

---

कञ्चुकीति ॥ कञ्चुकी । वदति । हे भरताचार्यौ । एषः -पुरोवर्ती । देवः -महाराजः । भवन्तौ । उपसर्पताम् - आश्रयताम् । एनमितिशेषः ॥

उभौ ॥ ( उपेत्य ) **विजयतां देवः** ॥

उभाविति ॥ उभौ-हरदत्तगणदासौ । उपेत्य - उपसृत्य । वदतः । देवः - महाराजः । विजयताम् - सर्वोत्कर्षेणवर्तताम् ॥ सू ॥ विपराभ्यांजेरित्यात्मनेपदम् ॥

राजा ॥ **स्वागतम् भवद्भ्याम्** ( परिजनं विलोक्य ) **। आसनेताव दत्रभवतोः** ॥

राजेति ॥ राजा - अग्निमित्रः । प्राह । भवद्भ्याम् -युवाभ्यां । स्वागतम् - सुष्टुआगतम् - आगमनम् । भावेक्तः । शुभागमनंकचिदित्यर्थः॥ क्रियाग्रहणमपि कर्तव्यमिति सम्प्रदानत्वाचतुर्थी ॥ अथ । परिजनं - परिचारकजनं । विलोक्य - वीक्षय । प्राह । अत्रभवतोः- अर्हणीययोरेतयोरभिनयाचार्ययोः । आसनेतात्रत् - पीठेतु । आनीयेतामितिशेषः ॥

उभौपरिजनोपनीतयो रासनयो रुपविष्टौ ॥

उभाविति ॥ उभौ - द्वावपिभरताचार्यौ । परिजनोपनीतयोः-भृत्यजनानीतयोः । आसनयोः- पीठयोः । उपविष्टौ - निषण्णौ ॥

राजा ॥ **किमिदं ? शिष्योपदेशकाले युगपदाचार्याभ्यामत्रोपस्थानम्** ॥

राजेति ॥ राजा । प्राह । शिष्योपदेशकाले -अधयेतृजनविद्याप्रदानवेळायां । आचार्याभ्यां - नाद्यगुरुभ्याम् । युगपत् - एकदा । अत्र-

राजसभयाम् । इदम् - एतत् । उपस्थानम् - आगमनम् । किं-किमर्थकम् ॥

---

गण ॥ देव ! श्रूयताम् । मया सुतीर्था दभिनयविद्या सुशिक्षिता । दत्तप्रयोग श्चास्मि देवेन, देव्याच परिगृहीतः ॥

---

गणदासइति ॥ गणदासः । ब्रवीति । हेदेव - राजन् । श्रूयतां-आकर्ण्यतां । आगमनप्रयोजनं त्वयेति कर्तृकर्माधयाहारः । मया । सुतीर्थात् - विशिष्टादुपाधयायात् ॥ नि ॥ तीर्थंशास्त्राध्वरक्षेत्रो पायोपाधयायमंत्रिष्वित्यमरः ॥ अभिनयविद्या - तौर्यत्रिकविद्या । सुशिक्षिता -सम्यगभ्यस्ता । दत्तप्रयोगः - शिष्यप्रतिपादितविनियोगश्च । अस्मि - भवामि । किंच । देवेन - राज्ञा । देव्या-पट्टमहिष्याच । परिगृहीतः - स्वीकृतः । अस्मीत्यत्रा प्यनुषजयते ॥

---

राजा ॥ बाढं जाने । ततःकिम् ॥

---

राजेति ॥ राजा । प्राह । गणदास । बाढं - दृढंयथातथा । जाने-अवैमि । त्वत्सारमितिशेषः । ततः - अनन्तरम् । किं -किमितिप्रश्ने ॥

---

गण ॥ सोऽह ममुना हरदत्तेन प्रधानपुरुषसमक्ष मयं नमे पादरजसापि तुल्यइ त्यधिक्षिप्तः ॥

---

गणदासइति ॥ गणदासः । कथयति । अमुना - अनेन । हरदत्तेन - एतन्नामकेननाद्याचार्येण । प्रधानपुरुषसमक्षं - मन्त्रिजनस्यपुरतः । सः - तादृशः । अहम् । अयम् - गणदासः । मे - मम । पादरजसा - चरणधूल्यापि । तुल्यः - समानः । विद्ययेतिशेषः । न - नभवति । इति-एवम् । अधिक्षिप्तः - निराकृतोऽस्मि ॥

---

हर ॥ देव ! अयमेव प्रथमं परिवादकरः । अत्रभवतःकि

**ल ममच समुद्रपल्वलयोरिव अन्तरमिति। तदत्रभवा निमं मांच शास्त्रे प्रयोगेच विमृशतु। देवएवनौ विशेषज्ञः प्राश्निकः॥**

हरदत्तइति॥ हरदत्तः। कथयति। हे देव - राजन्। अयं - गणदासएव। अत्रभवतः - पूज्यस्यगणदासस्य। ममचकिल। किलेतिवार्तायां॥ नि॥ वार्तासम्भाव्ययोःकिलेत्यमरः॥ समुद्रपल्वलयोः-सागरवेशन्तयोरिव। अन्तरं - भेदः। अस्तीतिशेषः। इति - अनेनप्रकारेण। प्रथमम् - आदौ। परिवादकरः - निन्दाकारी। तत् - तस्मात्। अत्रभवान् - पूज्योमहाराजः। शास्त्रे-भरतविद्यायां। प्रयोगे-विनियोगेच। इमं -गणदासं। मांच। विमृशतु -विवेचयतु। कस्मादितिचेत्। विशेषज्ञः-बहुज्ञः। देवः - महाराजएव। नौ - आवयोः। प्राश्निकः - प्रश्नं - विवादविषयपृच्छांकरोतीतितथोक्तः। सिद्धान्तनिर्णायकइत्यर्थः॥

**विदू॥ समत्थं पडिण्णादं ॥ छा॥ समर्थं प्रतिज्ञातम्॥**

विदूषकइति॥ विदूषकः। वक्ति। किमिति। समर्थं - सम्बद्धार्थंयथातथा। प्रतिज्ञातम् - अङ्गीकृतम्॥

**गण॥ प्रथमः कल्पः। अवहितो देवः श्रोतु मर्हति॥**

गणदासइति॥ गणदासः। प्राह। प्रथमःकल्पः -अयमेवमुख्यः पक्षः। कुतः। देवः - राजा। अवहितः - अप्रमत्तस्सन्। श्रोतुम् -आकर्णयितुम्। विवादमितिशेषः। अर्हति - युक्तोभवति॥

**राजा॥ तिष्ठतावत्। पक्षपात मत्र देवी मन्यते। त दस्याः पण्डितकौशिकीसहिताया स्समक्षमेव न्याय्यो व्यवहारः॥**

राजेति॥ राजाउभयोर्विवादंश्रुत्वावदति। किमिति। हे

गणदास । तावत् - इदानीं । तिष्ट - मात्वरस्वेत्यर्थः । देवी-पट्टमहिषी । अत्र - विवादपरिष्कारे । पक्षपातम् - एकस्मिन्पक्षेसमादरं । मन्यते-अत्रेति । तत् -तस्मात । पण्डितकौशिकीसहितायाः - पण्डितकौशिकीनामकपरिव्राजिकायुतायाः । अस्याः -देव्याः । समक्षं-सन्निकटएव । व्यवहारः -विवादः ॥ नि ॥ विवादो व्यवहारस्स्या दित्यमरः ॥ न्याय्यः - युक्तः ॥

---

विदू ॥ सुठ्ठु भवं भणादि ॥ छा ॥ सुष्ठु भवान् भणति ॥

---

विदूषकइति ॥ विदूषकः । ब्रवीति । हे राजन् । भवान् । सुष्ठु भणति - सम्यग्वदति ॥

---

आचार्यौ ॥ य द्देवाय रोचते ॥

---

आचार्याइति ॥ आचार्यौ - हरदत्तगणदासौ । वदतः । देवाय - राज्ञे । यद्रोचते - प्रियंभवति । तदावाभ्यामपिरोचतइति वाक्याध्याहारः ॥ सू ॥ रुच्यर्थानां प्रीयमाण इति सम्प्रदानत्वा चतुर्थी ॥

---

राजा ॥ मौद्गल्य! अमुं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्थ माहूयतां देवी ॥

---

राजेति ॥ राजा । प्राह । हे मौद्गल्य - एतन्नामककञ्चुकिन् । अमुंप्रस्तावम् - इममवसरम् ॥ नि ॥ प्रस्तावस्स्या दवसर इत्यमरः ॥ निवेद्य - विज्ञाप्य । देवी-पट्टमहिषी । पण्डितकौशिक्यासार्थं - एतन्नाम्न्यापरिव्राजिकयासह । आहूयताम् - आकार्यतां । त्वयेतिशेषः ॥

---

कञ्चु ॥ य दाज्ञापयति देवः । ( इतिनिष्क्रम्य सपरिव्राजिकया देव्यासह प्रविष्टः ॥

---

कञ्चुकीति ॥ कञ्चुकी । मौद्गल्यनाम सौविदल्लः । देवः - राजा । यदाज्ञापयति-यत्प्रयोजनमादिशति । तत्तथाकरोमीतिवाक्यशेषः । इति - एवमुक्त्वा । निष्क्रम्य -निर्गत्य । सपरिव्राजिकया-परिव्राजिका सहितया । देव्यासह - पट्टमहिष्या सार्कं । प्रविष्टः - राजसमीपंप्राप्तः ॥

---

कञ्चु ॥ **इतइतो भवती ॥**

---

कञ्चुकीति ॥ कञ्चुकी । प्राह । भवती । इतइतः - अनेनानेनमार्गेण । आगच्छत्विति शेषः । आदराद्द्विरुक्तिः ॥

---

धारिणी ॥ ( परिव्राजिकाम् विलोक्य ) **भअवदि ! हरदत्तस्स गणदासस्सअ संरम्भं कहं पेक्खसि ॥** छा ॥ **भगवति ! हरदत्तस्य गणदासस्य च संरम्भं कथं प्रेक्षसे ॥**

---

धारिणीति ॥ धारिणी-एतान्नाम्नीदेवी । परिव्राजिकां-पण्डितकौशिकीं । विलोक्य -वीक्ष्य । प्राह । हेभगवति-पूज्ये । हरदत्तस्य । गणदासस्यच । संरम्भं-विवादंप्रति । कथं-केनप्रकारेण । प्रेक्षसे - मन्यसे । अनयोःकस्य जयमालोचयसि ॥

---

परि ॥ **अलं स्वपक्षावसाद शंकया । न परिहीयते प्रतिवादिनो गणदासः ॥**

---

परिव्राजिकेति ॥ परिव्राजिका । ब्रवीति । देवी । स्वपक्षावसादशंकया -आत्मीयपक्षपराजयभयेन । अलम् - कृतम् । नकर्तव्येत्यर्थः । गणदासः । प्रतिवादिनः - प्रतिपक्षाद्धरदत्तात् । नपरिहीयते -पराजितोनभवतीत्यर्थः । अत्रपरिव्राजिकायाःस्त्रीत्वेपि लिङ्गित्वा त्संस्कृतमिति वेदितव्यम् । तथाचोक्तंदशरूपके ॥ देवद्विज नरेन्द्राणां लिङ्गिनां संस्कृतंवचइति ॥

---

धारि ॥ जइविएव्वं तहवि राअपरिग्गहो से पहुत्तणं उवहरदि ॥ छा ॥ यद्यप्येवं तथापि राजपरिग्र होऽस्य प्रभुत्व मुपहरति ॥

---

धारिणीति ॥ धारिणी-देवी। वक्ति। यद्यपि-विचार्यमाणेसति। एवं -अनेनैवप्रकारेणभवति। तथापि-तथासत्यपि। अस्य-हरदत्तस्य। राजपरिग्रहः-नृपावलम्बनम्। प्रभुत्वम्-महिमानम्। उपहरति-वर्धयति ॥

---

परि ॥ अयि राज्ञीशब्दभाजन मात्मानमपि चिन्तयतु भवती। पश्य ॥

श्लो ॥ अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहा दनलः।
अधिगच्छति महिमानं चन्द्रोऽपिनिशापरिगृहीतः॥१३

---

परिव्राजिकेति ॥ परिव्राजिका। वक्ति। किमिति। अयि-देवि। भवती। आत्मानं-स्वमपि। राज्ञीशब्दभाजनं-राजपत्नीशब्दपात्रं। चिंतयतु-विचारयतु। कुतः। पश्च-अवधारय। अतिमात्रेति॥ भानोः-सूर्यस्य। परिग्रहात्-अवलम्बनात्। अनलः-अग्निः। अतिमात्रभासुरत्वं -गाढप्रकाशमानत्वं। पुष्यति-वहति। कथं। चन्द्रः-इन्दुरपि। निशापरिगृहीतः-निशीथिनीस्वीकृतस्सन्। महिमानम्-तेजस्वित्वं। अधिगच्छति-प्राप्नोति॥

---

विदू ॥ अविहा अविहा। उवठ्ठिदा देवी पीठमद्दियं पण्डिदकोसिइं पुरोकरिअ तत्तभोदी धारिणी ॥ छा ॥ अपिहा अपिहा। उपस्थिता देवी पीठमर्दिकां (सहचारिणीं) पण्डितकौशिकीं पुरस्कृत्य तत्रभवती धारिणी ॥

---

विदूषकइति ॥ विदूषकः। कथयति। राजन्। अपिहापिहा-

आश्चर्यमाश्चर्यम्। आदराद्विरुक्तिः। तत्रभवती-पूजया। धारिणी-एतन्नाम्नी। देवी-पट्टमहिषी। पीठमर्दिका - पीठमर्दोनाम शृङ्गाररसे कामपुरुषार्थसहायोनायक समीपवर्तीपुरुषः। तदुक्तम्॥ पीठमर्दः समीपस्थः कार्यालोचनतत्परइति। अत्रविदूषकःपरिहासार्थं परिव्राजिकायां तद्धर्ममारोपितवानिति वेदितव्यम्। सहचारिणीमितिपाठे-सन्निकटवर्तिनीमित्यर्थः। पण्डितकौशिकीं - तदाख्यां परिव्राजिकां। पुरस्कृत्य - अग्रतोनिधाय। उपस्थिता - समागता॥

राजा॥ पश्याम्येनां यैषा॥

श्लो॥ मङ्गळालङ्कृता भाति कौशिक्या यतिवेषया।
त्रयी विग्रहवत्येव सम मध्यात्मविद्यया॥१४॥

राजेत्यादि॥ राजा। प्राह। किमिति। या। एषा-पुरोवर्तिनी देवी। मङ्गळालङ्कृता-मङ्गळं-कल्याणंयथातथा। अलङ्कृता - भूषितासती। यतिवेषया-परिव्राजकलिङ्गधारिण्या। कौशिकयासह। विग्रहवत्या-धृतशरीरया। अधयात्मविद्ययासमम् -वेदान्तविद्ययासाकं। त्रयी-वेदत्रितयीव। अत्रापि विग्रहवतीति विभक्तिविपरिणामेन योजनीयं। भाति-प्रकाशते। एनाम् - इमांपट्टमहिषीं। पश्यामि - विलोकयामि॥

परि॥ उपेत्य। विजयतां देवः॥

परिव्राजिकेति॥ परिव्राजिका - पण्डितकौशिकी। उपेत्य - नृपसमीपंप्राप्य। प्राह। देवः - राजा। विजयताम् - सर्वोत्कर्षेणवर्ततां॥

राजा॥ भगवति! अभिवादये॥

राजेति॥ राजा - नृपोऽग्निमित्रः। वक्ति। भगवति - पूज्ये। अभिवादये - प्रणमामि॥

---

परि ॥ श्लो ॥ महासारप्रसवयो स्सदृशक्षमयो र्द्वयोः ।
धारिणी भूतधारिण्यो र्भव भर्ता शरच्छतम् ॥१९

---

परिव्राजिकेति ॥ परिव्राजिका । आशास्ते। महासारप्रसवयोः- महान् - उत्कृष्टः । सारः - बलवान् । प्रसवः - सन्तानंययोस्तयोः । सदृशक्षमयोः - समानसहिष्णुतागुणयोः । धारिणीभूतधारिण्योः - धारिणी-नामपत्नी । भूतधारिणी- भूमिश्चेत्येतयोः । द्वयोः - उभयोः । भर्ता - एकत्रपतिः अन्यत्राधिपतिः । शरच्छतम् - वत्सरशतम् ॥ नि ॥ स्यादृतौ वत्सरे शर दित्यमरः ॥ भव - एधि । आशीरर्थेलोट् ॥

---

धारि ॥ जेदु जेदु अज्जउत्तो ॥ छा ॥ जयतु जय त्वार्यपुत्रः ॥

---

धारिणीति ॥ धारिणी। वक्ति । आर्यपुत्रः - भर्ता । जयतुजयतु - सर्वोत्कर्षेणवर्तताम् । आदराद्द्विरुक्तिः ॥

---

राजा ॥ स्वागतं देव्यै । (परिव्राजिकां विलोक्य) भगवति! क्रियता मासनपरिग्रहः ॥ (सर्वेउपविशन्ति ॥ )

---

राजेति ॥ राजा । प्राह । देव्यै - पट्टमहिष्यै । स्वागतम् - शुभागमनंखलु । अथ । परिव्राजिकां - पण्डितकौशिकीं । विलोक्य -वीक्ष्य । ब्रूते । हे भगवति - आर्ये । आसनपरिग्रहः - पीठस्वीकारः । क्रियतां - विधीयतां । त्वयेतिशेषः । इत्युक्त्यनन्तरम् । सर्वे - समस्ताः । उपविशन्ति - निषीदन्ति ॥

---

राजा ॥ भगवति! अत्रभवतो र्हरदत्तगणदासयोः परस्परम् विज्ञानसंघर्षिणो र्भगवत्या प्राश्निकपद मध्यासितव्यम् ॥

---

राजेति ॥ राजा । प्राह । हे भगवति - पूज्येपरिव्राजिके । परस्परम् - अन्योन्यं । विज्ञानसंघर्षिणोः - विद्यास्पर्धिनोः । अत्रभवतोः- पूजययोः । हरदत्तगणदासयोः । भगवत्या - विज्ञानसम्पन्नया । त्वयेतिशेषः । प्राश्निकपदं- प्रश्नं - विवादानुगतविषयपृच्छांकरोतीति प्राश्निकः । तस्यपदम् - स्थानम् । अधयासितव्यम् - अधिष्ठातव्यम् ॥

---

**परि ॥ सस्मितम् । अल मुपालम्भेन । पत्तनेसति ग्रामे रत्नपरीक्षा ? ॥**

---

परिव्राजिकेति ॥ परिव्राजिका । सस्मितम् - समन्दहासंयथातथावक्ति । राजन् । उपालम्भेन - निन्दोद्घाटनेन । अलं - कृतं । पत्तने- नगरेसति । ग्रामे - सामान्यजनवासस्थले । रत्नपरीक्षा - रत्नानां - मणीनां । परीक्षा - गुणदोषपरिशीलनं । भवतिकिमितिशेषः ॥

---

**राजा ॥ नैत देवम् । पण्डितकौशिकीखलु भगवती । पक्षपातिना वहं देवीच ॥**

---

राजेति । राजा । प्राह । परिव्राजिके । एतत् - भवदुक्तम् । एवम् - अनेनप्रकारेण । न -नभवति । कस्मादितिचेत् । भगवती-पूजयात्वम् । पण्डितकौशिकीखलु - पण्डितकौशिकयभिधानाहि । तस्मात्किमज्ञातमस्तीतिभावः । अहं । देवी-धारिणीच । पक्षपातिनौ - एकैकास्मिन्ममताभिमानविशिष्टौ ॥

---

**आचार्यौ ॥ सम्य गाह देवः । मध्यस्था भगवती नौ गुणदोषतः परिच्छेत्तु मर्हति ॥**

---

आचार्याविति ॥ आचार्यौ - हरदत्तगणदासौ । ब्रुवाते । कि

मिति । देवः - महाराजः । सम्यक् -समीचीनंयथातथा । आह - ब्रवीति। मध्यस्था - परिशीलनेपक्षपातरहिता । भगवती - पूज्यापण्डितकौशिकी। नौ - आवां । गुणदोषतः - सदसद्विवक्षया । परिच्छेत्तुम् - निर्णेतुम् । अर्हति - योग्याभवति ॥

---

राजा ॥ तेनहि प्रस्तूयताम् विवादः ॥

---

राजेति ॥ राजा । प्राह । तेनहि - तेनहेतुना । विवादः - परस्परविद्यास्पर्धित्वं । प्रस्तूयताम् - आरभ्यताम् । युवाभ्यामितिशेषः ॥

---

परि ॥ देव ! प्रयोगप्रधानंहि नाट्यशास्त्रम् किमत्र वाग्व्यवहारेण। कथंवा देवी मन्यते ॥

---

परिव्राजिकेति ॥ परिव्राजिका । कथयति। देव- राजन् । नाट्यशास्त्रम् - तौर्यत्रिकविद्या । प्रयोगप्रधानंहि - पात्रविनियोगप्रदर्शनप्राधान्यंखलु । अत्र -अस्मिन्विषये । वाग्व्यवहारेण - उभयोःकण्ठरवव्यापारेण । किं-किंवाप्रयोजनं । देवी - पट्टमहिषी । कथं - केनवाप्रकारेण । मन्यते - तर्कयति ॥

---

देवी ॥ जइ मं पुच्छसि तदा एदाणं विवादोएव्व ण मे रुच्चदि ॥ छा ॥ यदि मां पृच्छसि त दैतयो र्विवादएव न मे रोचते ॥

देवीति ॥ देवी । वक्ति । परिव्राजिके । मांपृच्छसियदि -मां प्रश्नंकरोषिचेत् । तदा - तर्हि । एतयोः -भरताचार्ययोः । विवादः-अन्योन्यसंघर्षणमेव । मे - मह्यं । नरोचते - प्रियोनभवति ॥

---

गण ॥ देवि ! न मां समानविद्यतया परिभवनीय मवमन्तु मर्हसि ॥

गणदासइति ॥ गणदासः । प्राह । हे देवि । समानविद्यतया - नाट्यशास्त्रे हरदत्तेनतुल्यतया ॥ अपरिभवनीयं-तिरस्कारानर्हं । मां । अत्र मन्तुं - परिभवितुं । नार्हसि - योग्यानभवसि ॥

विदू ॥ भो ! पेक्खामो उअरंभरिसंवादं किं मुधावेदणदाणेण एदाणं ॥ छा ॥ भो ! पश्याम उदरम्भरिसंवादम् । किं मुधावेतनदानेन एतयोः ॥

विदूषकइति ॥ विदूषकः । प्राह । भो - हे देवि । उदरम्भरिसंवादम् - उदरम्भर्योः - कुक्षिम्भर्योः । स्वार्थमात्रपरयोरित्यर्थः । संवादं - विवादं । पश्यामः - विलोकयामः । एतयोः - नाट्याचार्ययोः । मुधा - वृथा ॥ नि ॥ व्यर्थकेतु वृथामुधे त्यमरः ॥ वेतनदानेन - भृतिवितरणेन । किं - किमर्थम् ॥

देवी ॥ णं कळहप्पिओसि । छा ॥ ननु कलहप्रियोऽसि ॥

देवीति ॥ देवी । ब्रूते । ननु - विदूषक । कलहप्रियः - रणोत्सुकः । असि - भवसि ॥

विदू ॥ मा एव्वं चण्डि ! अण्णोण्णं कळहप्पिआणं मत्तहत्थिणं एक्कदरस्सि अणिज्जिदे कुदो उवसमो । छा ॥ मैवं चण्डि ! अन्योन्य कलहप्रियाणां मत्तहस्तिना मेकतरस्मिन्ननिर्जिते कुत उपशमः ॥

विदूषकइति ॥ विदूषकः । प्राह । हे चण्डि - कोपशीले । मैवम् - इत्थंनवक्तव्यम् । अन्योन्यकलहप्रियाणाम् - इतरेतरविवादसक्तचित्ता

नां । मत्तहस्तिनां -मदगजानांमध्ये । एकतरस्मिन् - अन्यतरस्मिन् । अनिर्जिते - अपराभूतेसति । उपशमः - शान्तिः । पर्याप्तिरित्यर्थः । कुतः- कस्माद्भवति ॥

राजा ॥ ननु स्वाङ्गसौष्ठवातिशय मुभयो र्दृष्टवती भगवती ॥

राजेति ॥ राजा । वक्ति । ननु - परिव्राजिके । उभयोः-द्वयोर्नाट्याचार्ययोः । स्वाङ्गसौष्ठवातिशयं - स्वशरीरसौन्दर्यविशेषं । भगवती- पूज्यात्वं । दृष्टवती - विलोकितवत्यसि ॥

परि ॥ अथकिम् ॥

परिव्राजिकेति ॥ परिव्राजिका । वदति । अथकिम् - तथैवेत्यर्थः ॥

राजा ॥ त दिदानी मतःपरं कि माभ्यां प्रत्याययितव्यं ॥

राजेति ॥ राजा । प्राह । तत् - तस्मात् । इदानीमद्य । आभ्यां- एताभ्यां नाट्याचार्याभ्याम् । अतःपरम् - अस्माच्छरीरसौष्टवादन्यत् । प्रत्याययितव्यं - बोधयितव्यं । किं - किंवाविद्यते ॥

परि ॥ तदेव वक्तुका मास्मि ॥

श्लो ॥ शिष्टा क्रिया कस्यचि दात्मसंस्था
संक्रान्ति रन्यस्य विशेषयुक्ता ।
य स्योभयं साधु स शिक्षकाणां
धुरि प्रतिष्ठापयितव्यएव ॥ १६ ॥

परिव्राजिकेति ॥ परिव्राजिका । कथयति । तत् - भवदुक्तमे व । वक्तुकामा - वदितुमिच्छुः । अस्मि - भवामि ॥ शिष्टेति ॥ कस्यचि त् - कस्यचनपुरुषस्य । क्रिया - शिक्षा । विद्याभ्यासइत्यर्थः । आत्मसंस्था - स्वनिष्ठासती । शिष्टा - रम्या । भवतीतिशेषः । अन्यस्य - इतरस्यपुरुष स्य । संक्रान्तिः - शिष्येषुप्रापणम् । क्रियायाइतिशेषः । विशेषयुक्ता - अतिशयवती । यस्य - पुरुषस्य । उभयम् - आत्मसंस्थानं । परसंक्रमणंचे तिद्वयम् । साधु - रम्यंभवति । सः - पुरुषः । शिक्षकाणाम् - उपदेशका नाम् । धुरि - अग्रे । प्रतिष्ठापयितव्यः - निवेशनीयएवभवति ॥

---

विदू ॥ सुदं अज्जेहिं भअवदीए वअणं । एस पिण्डित त्थो उवदेसदंसणादो णिण्णओत्ति ॥ छा ॥ श्रुत मार्याभ्यां भग वत्या वचनम् । एष पिण्डितार्थः । उपदेशदर्शना न्निर्णयइति ॥

---

विदूषकइति ॥ विदूषकः । प्राह । भगवत्याः - पण्डितकौशि कयाः । वचनं - शिष्टाक्रियेत्यादिवाक्यम् । आर्याभ्यां - पूज्याभ्यांयुवा भ्यां । श्रुतम् - आकर्णितंकिं । उपदेशदर्शनात् - शिष्यविद्याप्रदर्शनात् । नि र्णयः - न्यूनत्वाधिक्यनिष्कर्षइति । एषः - अयम् । पिण्डितार्थः - फलि तार्थः ॥

---

हर ॥ पर मभिमतं नः ॥

---

हरदत्तइति ॥ हरदत्तः । प्राह । नः - अस्माकं । परमभिमतं - मुख्याशयः ॥ अत्रउपदेशदर्शना दित्यादिना माळविकादर्शना त्सन्देहनिर्ण या इत्युतिर्नाम सन्ध्यङ्गमुक्तंभवति ॥

---

गण ॥ देवि ! एवं स्थितम् ॥

---

गणदासइति ॥ गणदासः । वक्ति । हे देवि - राज्ञि । एवम् - अनेनप्रकारेण । स्थितम् - वर्ततइत्यर्थः ॥

---

देवी ॥ जदाउण मन्दमेधा सिस्सा उवदेसं मळिणेदि । तदा णं आआरिअस्स दोसो ? । छा ॥ यदापुन मन्दमेधा शिष्योपदेशं मलिनयति । तदानी माचार्यस्य दोषः ॥

---

देवीति ॥ देवी । वदति । यदापुनः - यदातु । मन्दमेधा - जडबुद्धिः । शिष्या - छात्रा । उपदेशं - शिक्षां । मलिनयति - मलिनांकरोति । नगृह्णातीत्यर्थः । तदानीं - तदा । आचार्यस्य - गुरोः । दोषः - अपराधः किम् । काकुरत्रानुसन्धेय ॥

---

राजा ॥ देवि ! एव मापद्यते । विनेतु रद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति ॥

---

राजेति ॥ राजाप्राह । हे देवि । एवम् - इत्थम् । आपद्यते- पर्यवस्यति । कुतः । विनेतुः - उपदेशकस्य । अद्रव्यपरिग्रहोऽपि - अयोग्यपात्रस्वीकारश्च । बुद्धिलाघवं - शेमुषीजडत्वं । प्रकाशयति - प्रकटयति ॥

---

देवी ॥ ( जनान्तिकम् ) कहं दाणिं । ( गणदासंविलोक्य । प्रकाशम् ) अलं अज्जउत्तस्स उस्साहकारणं मणोरहं परिपूरिअ । विरम णिरत्थादो आरम्भादो । छा ॥ ... कथमिदानीं ... अल मार्यपुत्र स्योत्साहकारणं मनोरथं परिपूर्य । विरम निरर्था दारम्भात् ॥

---

देवीति ॥ देवी -पट्टमहिषी । जनांतिकं -नियतश्राव्यंयथातथा ।

वक्ति। इदानीं - अद्य। कथं - केनवाप्रकारेण। भवतीतिशेषः। अथ। गणदासं। विलोक्य - वीक्ष्य। प्रकाशम् - सर्वश्राव्यंयथातथा। वदति। आर्यपुत्रस्य - राज्ञः। उत्साहकारणं - संतोषहेतुम्। मनोरथं - वाञ्छां। परिपूर्य - सफलंकृत्वा। अलं - कृतं। मास्त्वित्यर्थः। निरर्थात् - निष्प्रयोजनात्। आरम्भात् - उपक्रमात्। विरम - निवर्तस्व॥

---

विदू॥ सुठ्ठु भोदी भणादि। भोगणदास! संगीदपदं ळम्भिअ सरस्सइउबाअणमोद आइं खादमाणस्स किं दे सुह णिग्गहेण विवादेण। छा॥ सुष्ठु भवती भणति। भो गणदास! संगीतपदंलब्ध्वा सरस्वत्युपायनमोदकानि खादमानस्य किं ते सुखनिग्रहेण विवादेन॥

---

विदूषकइति॥ विदूषकः। प्राह। किमिति। भवती। सुष्ठु - सम्यक्। भणति - वक्ति। भोगणदास - एतन्नामकनाट्याचार्य। सङ्गीतपदम् - तौर्यत्रिकापदेशं। लब्ध्वा - प्राप्य। सरस्वत्युपायनमोदकानि - भारत्युपहारभक्ष्यविशेषान्। खादमानस्य - भक्षमाणस्य। ते - तव। सुखनिग्रहेण - सुलभपराभवेन। विवादेन - वाक्कलहेन। किं - किंप्रयोजनम्॥

---

गण॥ सत्य मयमे वार्थो देवीवाक्यस्य। श्रूयता मवसर प्राप्त मिदानीम्॥

श्लो॥ लब्धास्पदोऽस्मीति विवादभीरो
स्तितिक्षमाणस्य परेण निन्दाम्।
य स्यागमः केवलजीविकायै
तं ज्ञानपण्यं वणिजं वदन्ति॥१७॥

---

गणदासइति ॥ गणदासः । कथयति । विदूषक । देवीवाक्य स्य - पट्टमहिषीवचनस्य । अयं - स्वप्रतिपादितएव । अर्थः - अभिधेयं । गम्यतइतिशेषः ॥ नि ॥ अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिष्वित्यमरः ॥ स त्यम् - ध्रुवम् । इदानीं - अद्य । अवसरप्राप्तम् - समयोचितम् । श्रूयतां - आकर्ण्यताम् । लब्धास्पदइति ॥ अहं - लब्धास्पदः - प्राप्तप्रतिष्ठोऽस्मी तिहेतोः । विवादभीरोः - विवादात् - वाक्कलहात् । भीरोः - पराजयस्यादि तिभीतस्य । परेण - अन्येन । निन्दां - परिवादं । तितिक्षमाणस्य - क्षम माणस्य । यस्य - पुरुषस्य । आगमः - शास्त्रज्ञानम् । केवलजीविकायै । आत्मजीवनमात्रार्थं । भववीतिशेषः । तं - पुरुषं । ज्ञानपण्यम् - शास्त्रा र्थज्ञानविक्रेतारं । वणिजं - वणिग्जनप्रायम् । वदन्ति - ब्रुवन्ति । बुधा इतिशेषः ॥

---

देवी ॥ अइरोवणीदा दे सिस्सा । अपरिणिठ्ठिदस्स उव देसस्स उण अणज्जं आवेदणं । छा ॥ अचिरोपनीता ते शि ष्या । अपरिनिष्ठितस्य उपदेशस्यपुन रनार्यं मावेदनम् ॥

---

देवीति ॥ देवी । वक्ति । ते - तव । शिष्या - छात्रामाळवि कापुनः । अचिरोपनीता - अचिरेण - स्वल्पकालेन । उपनीता - विद्याग्रह णधृतव्रता । अपरिनिष्ठितस्य - स्थैर्यमप्रापितस्य । उपदेशस्य - विद्याप्रधा नस्य । अवेदनं - प्रकाशनम् । अनार्यम् - अनर्हं ॥

---

गण ॥ अतएव मे निर्बंधः ॥

---

गणदासइति ॥ गणदासः । प्राह । अतएव - अस्मादेवहेतोः । मे - मम । निर्बन्धः - अभिनिवेशः ॥

---

देवी ॥ तेणहि दुवेवि भअवदीए उवदेसं दं सेह । छा ॥

तेनहि द्वावपि भगवत्यै उपदेशं दर्शयतम् ॥

देवीति ॥ देवी । वदति । गणदास । तेनहि - तेनहेतुना । द्वौ - युवामुभावपि । उपदेशं - स्वस्वविद्याप्रदाननैपुण्यं । भगवत्यै - पूज्यायै परिव्राजिकायै । दर्शयतं - प्रेक्षयतं । शिष्यद्वारेतिशेषः ॥

परि ॥ देवि नैत न्न्याय्यम् । सर्वज्ञस्या प्येकाकिनो निर्णयाभ्युपगमो दोषाय ॥

परिव्राजिकेति ॥ परिव्राजिका । वक्ति । हे देवि । एतत् - इदम् । नन्याय्यम् - नोचितुम् । कुतः । सर्वज्ञस्य - समस्तविद्यापारङ्गतस्यापि । एकाकिनः - एककस्य । असहायस्येत्यर्थः । निर्णयाभ्युपगमः - निश्चयज्ञानम् । दोषाय - संशयाय । भवतीत्यध्याहारः ॥

देवी ॥ ( जनांतिकम् ) मूढे परिव्वाजिए मं जग्गंतिपि सुत्तंविअ करेसि । ( इतिसासूयम् परावर्तते ) ॥ छा ॥ मूढे ! परिव्राजिके ! मां जाग्रतीमपि सुप्तामिव करोषि ॥

देवीति ॥ देवी । जनांतिकं - नियतश्राव्यंयथातथा । ब्रवीति । किमिति । मूढे - अनभिज्ञे । परिव्राजिके । जाग्रतीं - जागरूकामपि । मां । सुप्तां - निद्रितामिव । करोषि - कलयसि । इत्युक्त्वा । सासूयं - सकोपं । परावर्तते - पराङ्मुखीभवति ॥

राजा ॥ देवीं परिव्राजिकायै दर्शयति ॥

राजेति ॥ राजा । परिव्राजिकायै - पण्डितकौशिक्यै । देवीं - कुपितांपट्टमहिषीं । दर्शयति - हस्तविन्यासेनप्रेक्षयति ॥

परि ॥श्लो॥ अनिमित्त मिंदुवदने !
किं मत्रभवतः पराङ्मुखी भवसि।
प्रभवन्त्योऽपिहि भर्तृषु
कारणकोपाः कुटुम्बिन्यः ॥ १८ ॥

---

परिव्राजिकेति॥ परिव्राजिका। वदति। किमिति। हे इंदुवदने - चन्द्रानने। अत्रभवतः - पूज्याद्राज्ञस्सकाशात्। किं - किमर्थं। अनिमित्तम् - अकारणं। पराङ्मुखी - विमुखी। भवसि - असि। त्वमितिशेषः। कुटुम्बिन्यः - दाराः। भर्तृषु - पतिषु। प्रभवन्त्यः - समर्थास्सत्योऽपि। कारणकोपाः - सहेतुकरोषाः। भवन्तीतिशेषः। नतुहेतुंविनाकुप्यन्तीत्यर्थः॥

---

विदू॥ णं सकारणं एव्व। अत्तणो पक्खो रक्खिदव्वो (गणदासं विलोक्य) णं दिट्ठिआ कोवव्वाजेण देवीए परित्तादो भवं। सुसिक्खिदोविसव्वो उवदेसदंसणे ण णिण्णादो होदि।

छा॥ ननु सकारणमेव। आत्मनः पक्षो रक्षितव्यः। ... ननु दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान्। सुशिक्षितोऽपि सर्व उपदेशदर्शने न निष्णातो भवति॥

---

विदूषकइति॥ विदूषकः। प्राह। ननु - परिव्राजिके। सकारणमेव - सहेतुकमेव। अस्याः कोपोजातइति वाक्यशेषः। कुतः। आत्मनः - स्वस्य। पक्षः - परिग्रहः। परिजनइत्यर्थः। रक्षितव्यः - रक्षणीयोहि। अथ। गणदासं। विलोक्य - दृष्ट्वा। कथयति। ननु - नाट्याचार्य। दिष्ट्या - दैववशेन। देव्या - पट्टमहिष्या। कोपव्याजेन - रोषमिषेण। भवान्। परित्रातः - रक्षितः। सुशिक्षितः - सम्यग्विनीतोऽपि। सर्वः - समस्तजनः। उपदेशदर्शने - शिष्योपदेशप्रदर्शने। निष्णातः - निपु

णः। नभवति - नसम्पद्यते। प्रायेणेतिशेषः॥ अत्रदेवीकोपेन वस्तुविच्छेदेप्राप्ते विदूषककृतं प्रोत्साहन मुत्तरांकोपयोगित्वेना विच्छेदकारणत्वा द्बिंदुरित्यनुसन्धेयम्॥

---

गण॥ देवि श्रूयताम्। एवं जनो गृह्णाति। त दिदानीं॥

श्लो॥ विवादे दर्शयिष्यामि क्रियासंक्रान्ति मात्मनः।
यदि मां नानुजानासि परित्यक्तो स्म्यहं त्वया॥१९॥

( आसनादुत्थातु मिच्छति )॥

---

गणदासइति॥ गणदासः। प्राह। हे देवि। श्रूयताम् - आकर्ण्यतां। दिष्ट्येत्यादिविदूषकवाक्यमितिशेषः। जनः - लोकः। एवम् - इत्थम्। गृह्णाति - जानाति। तत् - तस्मात्। इदानीं - सम्प्रति। विवादइति॥ विवादे - वाक्कलहे। आत्मनः - स्वस्य। क्रियासंक्रान्तिं - शिष्येषु विद्योपदेशं। दर्शयिष्यामि - प्रेक्षयिष्यामि। माम् - आत्मानम्। त्वं। नानुजानासियदि - नानुमन्यसेचेत्। अहम्। त्वया। परित्यक्तः - विसृष्टः। अस्मि - भवामि। इत्युक्त्वा। आसनात् - पीठात्। उत्थातुम् - उन्नमितुम्। इच्छति - वाञ्छति॥

---

देवी॥ का गई। पभवदि आआरिओ सिस्सजणस्स। छा॥ का गतिः। प्रभव त्याचार्यक शिष्यजनस्य॥

---

देवीति॥ देवी - धारिणी। कागतिः - कोवाउपायः। इति विचिन्त्यप्राह। गणदास। आचार्यकः - उपदेशकः। शिष्यजनस्य - छात्रजनस्य। प्रभवति - प्रभुर्भवति। स्वतन्त्रोभवतीत्यर्थः॥

---

गण॥ चिर मपदेशशंकितो ऽस्मि। ( राजान मवलोक्य ) अनुज्ञातं देव्या त दाज्ञापयतु देवः। कस्मि न्नभिनयवस्तु न्य

पदेशं दर्शयिष्यामि ॥

---

गणदासइति ॥ गणदासः। प्राह। चिरं - चिरकालात्। अपदेशशंकितः - अपदेशे - निकारे। निरसनइत्यर्थः। शंकितः - संजातवितर्कः। अस्मि - भवामि। सा देवीवचनेन इदानी मपगतेत्यर्थः। अथ। राजानम् - अग्निमित्रम्। अवलोक्य - वीक्ष्य। कथयति। राजन्। देव्या - पट्टमहिष्या। अनुज्ञातम् - आज्ञापितम्। उपदेशदर्शनमितिशेषः। कस्मिन् - कीदृशे। अभिनयवस्तुनि - व्यञ्जकविषये। उपदेशं - विद्याप्रदानं। दर्शयिष्यामि -प्रेक्षयिष्यामि। तत् -अभिनयवस्तु। देवः - महाराजः। आज्ञापयतु - आदिशतु ॥

---

राजा ॥ य दादिशति भगवती ॥

---

राजेति ॥ राजा। प्राह। भगवती - पूज्यापरिव्राजिका। यदादिशति - यन्नियोजयति। तत्प्रदर्शयेतिवाक्यशेषः ॥

---

परि ॥ किमपि देव्या मनसि वर्तते तत शंकितास्मि ॥

---

परिव्राजिकेति ॥ परिव्राजिका। वक्ति। देव्याः - पट्टमहिष्याः। मनसि - हृदये। किमपि - किंचा। वर्तते - तिष्ठति। ततः - तस्मात्कारणात्। शंकितास्मि - बिभेमि ॥

---

देवी ॥ भग वीसद्धं पभविस्सदि पभु अत्तणो परिअणस्स। छा ॥ भग विस्रब्धम्। प्रभविष्यति प्रभु रात्मनः परिजनस्य ॥

---

देवीति ॥ देवीवदति। परिव्राजिके। त्वं। विस्रब्धम् - यथेच्छं। भग - वद। कुतः। प्रभुः - अधिपतिः। आत्मनः - स्वस्य। परि

जनस्य - परिवारजनस्य । प्रभविष्यति - प्रवर्तकोभविष्यति ॥

राजा ॥ ममचेति ब्रूहि ॥

राजेति ॥ राजा । प्राह । देवि । ममच - आत्मनोपि । प्रभविष्यसीति पुरुषभेदेनानुषज्यते । इति - एवं । ब्रूहि - वद ॥

देवी ॥ भअवदि भण दाणिं ।छा॥ भगवति भ णेदानीं ॥

देवीति ॥ देवी । वक्ति । हे भगवति - परिव्राजिके । इदानीं - साम्प्रतं । भण - ब्रूहि ॥

परि ॥ देव शर्मिष्ठायाः कृतिं चतुष्पदोत्थं छलिकं दुष्प्रयोज्य मुदाहरन्ति त त्रैकार्थसंश्रय मुभयोः प्रयोगं पश्यामः । तावता ज्ञायतए वात्रभवतो रुपदेशान्तरम् ॥

परिव्राजिकेति ॥ परिव्राजिका । वक्ति । हेदेव - राजन् । शर्मिष्ठायाः - एतन्नाम्नयाशुक्रपत्न्या । कृतिं । कृतमित्यर्थः । चतुष्पदोत्थं - चतुष्पदीयुक्तं । छलिकम् - एतन्नामकंनाटकं । दुष्प्रयोज्यं - प्रयोगेकष्टतरम् । उदाहरन्ति - कथयन्ति । बुधाइतिशेषः । तत्र - तस्मिन्नाटके । उभयोः - हरदत्तगणदासयोः । एकार्थसंश्रयम् - एकार्थः - एकविषयः । संश्रयः - आश्रयः यस्यतादृशम् । प्रयोगं - नाटकाभिनयम् । पश्यामः - विलोकयामः । तावता - तन्मात्रेण । अत्रभवतोः - पूज्ययोः हरदत्तगणदासयोः । उपदेशान्तरम् - उपदेशतारतम्यं । ज्ञायते - अवगम्यतएव ॥

आचार्यौ ॥ य दाज्ञापयति भगवती ॥

आचार्याविति ॥ आचार्यौ - नाट्याचार्यौ । वदतः । भगवती

-पूजचापण्डितकौशिकी। यदाज्ञापयति - यदनुशास्ति। तत्तथाकुर्वइतिवा क्यशेषः॥

विदू ॥ तेणहि दुवे वि वण्णावेक्खागेहे संगीदरअणं करिअ अत्तभवदो दूदं पेसध। अहवा मुदंगसद्दोज्जेव्व णो उठ्ठावइस्सदि। छा ॥ तेनहि द्वावपि वर्णावेक्षागृहे संगीतरचनां कृत्वाऽत्रभवतो दूतं प्रेषयतम्। अथवा मृदङ्गशब्दएव न उत्थापयिष्यति ॥

विदूषकइति॥ विदूषकः। प्राह। तेनहि - तेनहेतुना। द्वावपि - युवां। वर्णावेक्षागृहे - वर्णिकाप्रेक्षागारे। सङ्गीतरचनां - तौर्यत्रिकसंविधानं। कृत्वा - विधाय। अत्रभवतः - महाराजस्य। दूतं - भृत्यं। प्रेषयतम् - प्रस्थापयतम्। अथवा - तथानोचेत्। मृदङ्गशब्दः - मर्दलध्वनिरेव। नः - अस्मान्। उत्थापयिष्यति - उत्थितान् करिष्यति॥

हर ॥ तथा ( इत्युत्तिष्ठति ) ॥

हरदत्तइति॥ हरदत्तः। तथा - तेनप्रकारेणकरोमि। इति - एवमुक्त्वा। उत्तिष्ठति - आसनादुत्थितोभवति॥

( गणदासो धारिणी मवलोकयति )

गणदासइति॥ गणदासः। धारिणीम् - एतन्नाम्नींदेवीं। अवलोकयाति - पश्यति॥

देवी ॥ ( गणदासं विलोकय ) जई भोदु अज्जो। णं विजअब्भत्थिणी अहं अज्जस्स। छा॥ जयी भव त्वार्यः। ननु विजयाभ्यर्थिं न्यह मार्यस्य ॥

देवीति ॥ देवी । गणदासं । विलोक्य - वीक्ष्य । प्राह । किमिति । आर्यः - पूज्यः । जयीभवतु - जयशीलस्संपद्यताम् । अहं । आर्यस्य - तव । विजयाभ्यर्थिनीननु - जयकांक्षिण्येव ॥

---

आचार्यौ प्रस्थितौ ॥

---

आचार्याविति ॥ आचार्यौ - हरदत्तगणदासौ । प्रस्थितौ - निर्गतौ ॥

---

परि ॥ इतस्तावत् ॥

---

परिव्राजिकेति ॥ परिव्राजिका -पण्डितकौशिकी । ब्रूते । किमिति । हे नाट्याचार्यौ । इतः - इमंप्रदेशं । तावत् - पुनः । आगच्छतमिति शेषः ॥

---

आचार्यौ ॥ परिवृत्य । इमौ स्वः ॥

आचार्याविति ॥ आचार्यौ - नाट्याचार्यौ । परिवृत्य - निवृत्य । वदतः । परिव्राजिके । इमौ - एतावावां । स्वः - आगताभवावः ॥

---

परि ॥ निर्णयाधिकारे ब्रवीमि। सर्वांगसौष्ठवाभिव्यक्तये विगतनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु ॥

---

परिव्राजिकेति ॥ परिव्राजिका । वदति । निर्णयाधिकारे-निर्णयस्य-युवयो स्तारतम्यनिश्चयस्य । अधिकारे - नियोगे । स्थितेतिशेषः । अहं । ब्रवीमि - वदामि । सर्वाङ्गसौष्टवाभिव्यक्तये - समस्तावयवसौन्दर्यप्रकाशनाय । विगतनेपथ्ययोः - अलंकारबाहुल्यरहितयोः ॥ नि ॥ आकल्पवेषौ नेपथ्यं प्रतिकर्मप्रसाधन मित्यमरः ॥ पात्रयोः - अभिनेयवेषयोः । प्रवेशः - समागमः । अस्तु - भवतु ॥ अत्रगुणवत्त्वस्य गम्यमानत्वा द्विलोभनंनाम सन्ध्यङ्गमुक्तंभवति ॥

उभौ ॥ नेद मावयो रुपदेश्यम् । इतिनिष्क्रान्तौ ॥

उभाविति ॥ उभौ - भरताचार्यौ । कथयतः । हेपरिव्राजिके। इदं - सर्वांगेत्यादिवाक्यम् । आवयोः । नोपदेशयम् - नवक्तव्यम् । इ ति - एवमुक्त्वा । निष्क्रान्तौ - निर्गतौ ॥

देवी ॥ ( राजान मवलोक्य ) जइ राअक्कज्जेसुवि ईरिसी णिउणदा अज्जउत्तस्स तदो सोहणं भोदि । छा ॥ …यदि रा जकार्येष्व पीदृशीनिपुण तार्यपुत्रस्य तत श्शोभनं भवति ॥

देवीति ॥ देवी - पट्टमहिषी । राजानम् - नृपम् । अवलोक्य- वीक्षय । प्राह । आर्यपुत्रस्य – महाराजस्य । राजकार्येषु -व्यवहारेष्वपि । ईदृशी - एतादृशी । निपुणतायदि - नैपुण्यंवर्ततेचेत् । ततः - तर्हि । शो भनं - सम्यक् । भवति - भवेत् ॥ अत्रगूढार्थभेदना दुर्भेदोनाम सन्धयङ्ग मुक्तंभवति ॥

राजा ॥

श्लो ॥ अल मन्यथागृहीत्वानखलुमनस्विनि मयाप्रयुक्त मिदं । प्राय स्समानविद्याः परस्परयशःपुरोभागाः ॥२०॥

राजेत्यादि॥ राजा। प्राह। कथम् । हे देवि । अन्यथा - इ तरप्रकारेण । गृहीत्वा - विज्ञाय । अलम् - कृतम् । मास्त्वित्यर्थः । म नस्विनि - मानवति । इदम् - एतद्विवादजननं । मया । नप्रयुक्तंखलु - न कृतंहि। समानविद्याः - तुल्यविद्याः । प्रायः - बाहुल्येन ॥ नि ॥ प्रायोव यसिबाहुल्ये तुल्या नशनयोरपीत्यमरः ॥ परस्परयशःपुरोभागाः - परस्परय शस्सु - अन्योन्यकीर्तिषु । पुरोभागः - दोषैकदर्शनं येषां ते तथोक्ताः । पर स्परस्पर्धिनइतिभावः ॥

नेपथ्ये मृदङ्गध्वनिः ॥

---

नेपथ्यइति ॥ नेपथ्ये - यवनिकाभ्यन्तरे । मृदङ्गध्वनिः - मर्दल निनादः । श्रुतइतिशेषः ॥

---

सर्वेकर्णंददति ॥

---

सर्वइति ॥ सर्वे - राजादयः । कर्णं - श्रोत्रं । जातावेकवचनं। ददति - दिशन्ति । आकर्णयन्तीत्यर्थः ॥

---

परि ॥ हन्त प्रवृत्तं संगीतकम् । तथाह्येषा ॥

श्लो ॥ जीमूतस्तनितविशंकिभि र्मयूरै
रुद्ग्रीवै रनुगमितस्य पुष्करस्य ।
निर्ह्रादि न्युपचितमध्यमस्वरोत्था
मायूरी मदयति मार्जना मनांसि ॥२१॥

---

परिव्राजिकेत्यादि ॥ परिव्राजिका - पण्डितकौशिकी । कथय ति । सङ्गीतकं - तौर्यत्रिकं । प्रवृत्तम् - आरब्धम् । हन्त - आश्चर्यम् । त थाहि - तदेवप्रतिपादयति । जीमूतस्तनितविशंकिभिः - मृदङ्गध्वनौ मेघग र्जितभ्रान्तिमद्भिः । अतएव । उद्ग्रीवैः - हर्षादुन्नमितकण्ठैः । मयूरैः - ब र्हिणैः । अनुगमितस्य - अनुनादितस्य । पुष्करस्य - मुरजमुखस्य । नि र्ह्रादिनो - मधुरगम्भीरध्वनियुता । उपचितमध्यमस्वरोत्था - उपचितः - मयूरस्वरानुनादेनबहुळीकृतः । योमध्यमस्वरः - मध्यमाख्यस्वरविशे षः । तस्मात् उत्था - उद्भूता । मायूरी - मयूरध्वनिसदृशी । एषा - इयं। मार्जना - ताडना । मनांसि - चेतांसि । मदयति - हर्षयति ॥

---

राजा ॥ देवि ! तस्या स्सामाजिका भवाम ॥

---

राजेति ॥ राजा । प्राह । हे देवि । तस्याः - परिषदः । सा माजिकाः - सभासदः । भवाम - स्यामकिम् । अधीष्टेलोट् ॥

---

देवी ॥ ( स्वगतम् ) **अहो अविणयो अज्जउत्तस्स ।** ( सर्वेउत्तिष्ठन्ति ) छा ॥ **अहो अविनय आर्यपुत्रस्य ॥**

---

देवीति ॥ देवी । स्वगतम् - आत्मगतम् । वक्ति । आर्यपुत्रस्य - महाराजस्य । अविनयः - धार्ष्ट्यम् । अहो - अतीवाश्चर्यकरोवर्तते॥ सर्वे - तत्रस्थाः । उत्तिष्ठन्ति - उत्थिताभवति ॥

---

विदू ॥ ( अपवार्य ) **भो धीरं गच्छ ! तत्तभोदी धारिणी विसंवादइस्सदि ···॥** छा ॥ **भो धीरं गच्छ ! तत्रभवती धारिणी विसंवदिष्यति ॥**

---

विदूषकइति ॥ विदूषकः । अपवार्य - त्रिपताकहस्तेन मुखमावृत्य । राजानंप्राह । भो - राजन् । धीरं - गम्भीरं । गच्छ - याहि । नोचेत् । तत्रभवती - पूज्या । धारिणी - एतन्नामिकादेवी । विसंवदिष्यति - अन्यथामन्यते ॥

---

राजा ॥

श्लो ॥ **धैर्यावलम्बिनमपि त्वरयति मां मुरजवाद्यरा वोऽयम् ।**
**अवतरत स्सिद्धिपथं शब्द स्स्वमनोरथस्येव ॥२२॥**

---

राजेति ॥ राजा । प्राह । विदूषक । अयम् - एषश्रूयमाणः । मुरजवाद्यरावः - मृदङ्गध्वनिः । धैर्यावलम्बिनं - धैर्यावष्टम्भमपि । मां । सिद्धिपथं - निष्पत्तिमार्गम् । अवतरतः - प्राप्नुवतः । स्वमनोरथस्य - आत्मेप्सितस्य । शब्दः - ध्वनिरिव । त्वरयति - सम्भ्रमयति ॥ अत्रबीजस्य

पुनरावर्तना त्समाधानंनाम सन्धयङ्गमुक्तंभवति । अत्रोपक्षेपादिषु सन्धय ङ्गेषु कतिचिदेवकविना दर्शितानि । नेतराणि । तथापिनदोषः । तदुक्तम् । न्यूनमप्यत्र यैःकैश्चि दङ्गैर्नाट्यं नदुष्यति । यद्युपात्तेषुसम्पत्ति राराधयति तद्विद इतिवचनात् ॥ अत्रनृत्यदर्शन निश्चयान्त प्रथमांकासमाप्त्यैव उत्त रांक विष्कम्भादौ प्रतिपाद्यायाः स्सङ्गीत रचनायाः अत्रैव प्रतिपादना दं कावतरणंनामाऽथापक्षेपकमुक्तंभवति । यथोक्तम् । अंकावतार स्त्वंका न्तेपात्रेणां कस्यसूचनादिति ॥

---

इतिनिष्क्रान्तास्सर्वे ॥

---

इतीति ॥ इति-एवं । सर्वे-राजादयः । निष्क्रान्ताः- निर्गताः॥

---

## इ ति प्र थ मों ऽ कः ॥

इति श्रीमन्मृत्युञ्जय निश्शंक क्षोणीपालविरचिते
मालविकाग्निमित्रव्याख्याने विबुधरञ्जनी
समाख्याने प्रथमोऽकः ॥

श्रीरस्तु

# माळविकाग्निमित्रम्.

## द्वितीयोऽङ्कः-

ततःप्रविशति सङ्गीतरचनायाम् कृतायां मासनस्थ स्सवयस्यो राजा, धारिणी, परिव्राजिका, विभवतश्च परिवारः ॥

कविरिदानीं संकान्तरंप्रस्तौति । ततइति ॥ ततोऽनन्तरम् । सङ्गीतरचनायां - तौर्यत्रिकसंविधाने । कृतायां - विहितायांसत्याम् । आसनस्थः - पीठोपविष्टः । सवयस्यः - ससखा । राजा - अग्निमित्रः । धारिणी - देवी। परिव्राजिका - पण्डितकौशिकी। विभवतः - वैभवानुसारेण। परिवारः - परिजनश्च । प्रविशति - रङ्गस्थलंप्राप्नोति ॥

राजा ॥ भगवति ! अत्रभवतो राचार्ययोः कतरस्य प्रथमं प्रयोगं द्रक्ष्यामः ॥

राजेति ॥ राजा । प्राह । हे भगवति-पूज्येपरिव्राजिके । अत्रभवतोः - महनीययोः । आचार्ययोः - भरताचार्ययोर्मध्ये । कतरस्य - कस्य । प्रयोगं-नाटकप्रयोगं। प्रथमम् - आदौ। द्रक्ष्यामः-विलोकयिष्यामः। कथयेतिशेषः ॥

परि ॥ ननु समानेऽपि ज्ञानवृद्धभावे वयोवृद्धत्वा द्गणदासः पुरस्कारमर्हति ॥

---

परिव्राजिकेति ॥ परिव्राजिका । वदति । ननु - राजन् । ज्ञानवृद्धभावे - विद्याप्रयुक्तवृद्धत्वे । समाने - तुल्येसत्यपि । वयोवृद्धत्वात्- वयसा जयेष्ठत्वात् । गणदासः - एतन्नामकनाट्याचार्यः । पुरस्कारम् - प्रथ मसत्कारंप्रति । अर्हति - योग्योभवति ॥ भगवतीत्यादिना गणदासःपुरस्का र मर्हतीत्यन्तेन प्रतीयमानं राज्ञउपायतो माळविकादर्शनंप्रयत्नोनाम द्विती यावस्थेति मन्तव्यम् । अत्र बिन्दुप्रयत्नयो स्समन्वया त्प्रतिमुखसंधि रि त्यनुसन्धेयम् ॥

---

राजा ॥ तेनहि मौद्गल्य ! एव मत्रभवतो रावेद्य नियोग मशून्यं कुरु ॥

---

राजेति ॥ राजाप्राह । हेमौद्गल्य - एतन्नामककञ्चुकिन् । तेनहि - तेनंहेतुना । अत्रभवतोः - हरदत्तगणदासयोः । एवं - परिव्राजिकोक्तप्र कारेण । आवेद्य - निवेद्य । नियोगं - निदेशम् । अशून्यम् - शून्यरहित म् । पूर्णमित्यर्थः । कुरु - विधेहि ॥

---

कञ्चु ॥ य दाज्ञापयति देवः । ( इतिनिष्क्रान्तः )

---

कञ्चुकीति ॥ कञ्चुकी - सौविदल्लः । वक्ति । देवः - राजा । यत् - कार्यम् । आज्ञापयति - नियुंक्ते । तत्तथाकरोमीतिवाक्यशेषः । इति - एवमुक्त्वा । निष्क्रान्तः - निर्गतः ॥

---

प्रविश्यगणदासः ॥ देव ! शर्मिष्ठायाः कृति र्लयमध्या च तुष्प दास्ति । तस्यास्तु चतुष्पदवर्णकं छलिकप्रयोग मेकमना देव श्श्रोतु मर्हति ॥

---

प्रविश्येति ॥ गणदासः । प्रविश्य - प्राप्य । वदति । हेदे

व । शर्मिष्ठायाः-एतन्नामिकायावृषपर्वदुहितुः । कृतिः-काव्यम् । लय मध्या-लयेन-ताळकरणेन । मध्या-मध्यमानयुक्ता । चतुष्पदा-चतुष्खण्डासती । अस्ति-वर्तते । तस्याः-कृतेः । चतुष्पदवर्णकं-चतुष्पादपरिमितवर्णकयुक्तं । छलिकप्रयोगं-छलिकसंज्ञिकनाटकाभिनयं । देवः-राजा । एकमनाः-अवहितचित्तस्सन् । श्रोतुम्-आकर्णयितुम् । अर्हति-अर्होभवति ॥

---

राजा ॥ आचार्य ! बहुमाना दवहितोऽस्मि ॥

---

राजेति ॥ राजा-प्राह । आचार्य-हे गणदास । बहुमानात्-अत्यादरात् । अवहितः-अप्रमत्तः । अस्मि-भवामि ॥

---

निष्क्रान्तो गणदासः ॥

---

निष्क्रान्तइति ॥ गणदासः । निष्क्रान्तः-निर्गतः ॥

---

राजा ॥ ( जनान्तिकम् ) वयस्य !

श्लो ॥ नेपथ्यान्तरिताया श्चक्षु र्दर्शनसमुत्सुकं तस्याः ।
संहर्तु मधीरतया व्यवसितमिव मे तिरस्करिणीं ॥२३

---

राजेति ॥ राजा । जनान्तिकं-नियतश्राव्यंयथातथा । वदति । हे वयस्य-सखे । नेपथ्येति । नेपथ्यान्तरितायाः-यवनिकान्तरस्थितायाः । तस्याः-माळविकायाः । दर्शनसमुत्सुकं-अवलोकनोत्कण्ठितं । मे-मम । चक्षुः-नेत्रेन्द्रियम् । अधीरतया-तरळतया । तिरस्करिणीं-यवनिकां । संहर्तुं-अपसारयितुं । व्यवसितम्-उद्युक्तमिवस्थितम् ॥ अत्रे ष्टार्थविषये च्छायागम्यमानत्वा द्विलासोनाम सन्ध्यङ्गमुक्तंभवति ॥

---

विदू ॥ ( अपवार्य) उवठ्ठिदं णअणमहु सण्णिहिदमक्खि

अंच ता अप्पमत्तो दाणिं पेक्ख । छा ॥ ...उपस्थितं नयनमधु सन्निहितमाक्षिकं त दप्रमत्त इदानीं प्रेक्षस्व ॥

---

विदूषकइति ॥ विदूषकः । अपवार्य - जनांतिकं । प्राह । राजन् । सन्निहितमाक्षिकम् - निकटस्थितमक्षिकासंघं । नयनमधु - नेत्रयोर्मधुतुल्यंवस्तु । उपस्थितं - सम्प्राप्तं । तत्तस्मात् । इदानीं - अद्य । अप्रमत्तः - अवहितस्सन् । प्रेक्षस्व - पश्य ॥

---

( ततःप्रविश त्याचार्या वेक्षयमा णाङ्गसौष्टवा मालविका )

---

ततइति ॥ ततः - अनन्तरम् । आचार्या वेक्षयमाणाङ्गसौष्टवा - आचार्येण - गणदासेन । अवेक्षयमाणम् - दृशयमानम् । अङ्गानाम् - तत्तदवयवानाम् । सौष्टवम् - अनवद्यत्वंयस्यास्सातथोक्ता । मालविका - एतन्नाम्नीबालिका । प्रविशति - प्राप्नोति ॥

विदू ॥ (जनान्तिकम्) पेक्खदु भवं । णक्खु से पडिच्छंदादोवि हीअदि महुरदा । ...छा ॥ प्रेक्षतां भवान् । नखल्वस्याः प्रतिच्छन्दादपि हीयते मधुरता ॥

---

विदूषकइति ॥ विदूषकः । जनान्तिकं - नियतश्राव्यम् । प्राह । राजन् । भवान् । प्रेक्षतां - पश्यतु । अस्याः-मालविकायाः । मधुरता - सौन्दर्यं । प्रतिच्छन्दात् - परनियोगानुवर्तित्वादपि । नहीयतेखलु - न्यूनानभवतिहि ॥

---

राजा ॥ ( अपवार्य ) वयस्य !

श्लो ॥ चित्रगताया मस्यां कांतिविसंवादशंकि मे हृदयम् ।
सम्प्रति शिथिलसमाधि मन्ये येनेय मालिखिता ॥२४

---

राजेति ॥ राजा । अपवार्य - जनान्तिकं । प्राह । हे वयस्य -

सखे । चित्रेति ॥ चित्रगतायाम् - आलेख्यलिखितायाम् । अस्यां - बालिकायां । दृष्टायामितिशेषः । मे - मम । हृदयं - चेतः । कांतिविसंवादशंकि - एतस्याःईदृशीकान्तिर्भवे न्नवेतिसन्देहयुक्तम् । आसीदितिशेषः । सम्प्रति - इदानीं । साक्षाद्वीक्षणसमयइत्यर्थः । येन - शिल्पिना । इयं - बालिका । आलिखिता - चित्रनिवेशिता । तं - शिल्पिनं - शिथिलसमाधिम् - अनिपुणलेख्यसामग्रीकं । मन्ये - सम्भावयामि ॥

---

गण ॥ वत्से ! मुक्तसाध्वसा सत्वस्था भव ॥

---

गणदासइति ॥ गणदासः । ब्रूते । हे वत्से - बाले । मुक्तसाध्वसा - परित्यक्तभयासती । सत्वस्था - स्वस्थचित्ता । भव - एधि ॥

---

राजा ॥ ( स्वगतम् ) अहो, सर्वा स्ववस्था स्वनवद्यता रूपविशेषस्य । तथाहि ॥

श्लो ॥ दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नता वंसयो
स्संक्षिप्तं निबिडोन्नतस्तन मुरः पार्श्वे प्रमृष्टेइव ।
मध्यः पाणिमि तोऽमितंच जघनं पादा वराळांगुळी
छन्दो नर्तयितु र्यथैव मनसिश्लिष्टंतथास्या वपुः ॥२८

---

राजेति ॥ राजा । स्वगतम् - आत्मगतम् । प्राह । रूपविशेषस्य - सौन्दर्यातिशयस्य । सर्वासु - समस्तासु । अवस्थासु - समयेषु । अनवद्यता - निर्दोषता । अहो - आश्चर्यम । तथाहि - तदेवोपपादयति । दीर्घाक्षमिति ॥ वदनम् - आननम् । शरदिन्दुकान्ति - शरत्कालचन्द्रसमप्रभं । प्रसन्नमित्यर्थः । दीर्घाक्षं - विशालनेत्रं । बाहू - भुजौ । अंसयोः - स्कन्धयोः ॥ नि ॥ स्कन्धोभुज शिरोंऽसोऽ स्त्रीत्यमरः ॥ नतौ - नम्रौ । लम्बमानावित्यर्थः । उरः - वक्षः । निबिडोन्नतस्तनम् - निबिडौ - घनौ । उन्नतौ - पृथुलौ । स्तनौ - पयोधरौ । यस्मिन्तथाभूतंसत् । संक्षिप्तं - संकु

चितमिवस्थितं । पार्श्वे - कुक्षिपक्षभागौ । प्रमृष्टे - शोधितेइवस्थिते । मध्यः - अवलग्नम् ॥ नि ॥मध्यमञ्चावलग्नञ्च मध्योऽस्त्रीत्यमरः ॥ पाणिमितः - मुष्टिपरिमितः । अतिसूक्ष्मइत्यर्थः । जघनम् -कटिपुरोभागः ॥ नि ॥ पश्चान्नितम्बस्स्त्रीकट्याः क्लीबेतुजघनम्पुरइत्यमरः ॥ अमितं-बृहत्तरञ्च । पादौ - चरणौ । अराळांगुळी - अराळाः - कुटिलाः । अंगुळयोययोस्तथाभूतौ । नर्तयितुः - नाट्याचार्यस्य । मनसि - हृदये । यथा - येनप्रकारेण । छन्दः - अभिप्रायः । भवतीतिशेषः । तथा - तेनैवप्रकारेण । अस्याः -बालिकायाः । वपुः - शरीरं । श्लिष्टम्-सङ्गतम् ॥

---

माळविका ॥ ( उपगानं कृत्वा चतुष्पदवस्तुकं गायति )

**दुल्लहो पिओ तस्सि भव हिअअ ! णिरासं**
**अम्मो अपंगओ मे फुरइ किंपि वामओ ।**
**एसो सो चिरदिठ्ठो कहं उणु दट्ठव्वो**
**णाह ! मं पराहीणं तुइ गणअ सतिण्णं ॥**

( ततो यथारस मभिनयति ) छा ॥ ··· **दुर्लभः प्रिय स्तस्मिन् भव हृदय ! निराशम् । अह हापांगको मे स्फुरति किमपि वामकः । एष स चिरदृष्टः कथं पुन र्द्रष्टव्यो नाथ ! मां पराधीनां त्वयि गणय सतृष्णाम् ॥**

---

माळविकेति ॥ माळविका । उपगानम् - गानात्पूर्वं करणीयं वसन्तादिरागानुसृतं स्वरविशेषम् । आलापचारीतिप्रसिद्धम् । कृत्वा - विधाय । चतुष्पदवस्तुकम् - चतुष्पदगीतम् । गायति - गानंकरोति । यथा ॥ दुल्लहोइत्यादि ॥ प्रियः - अभीष्टः । दुर्लभः - यतोदुष्प्रापः । हेहृदय -चित्त । अतः । तस्मिन् - प्रिये । निराशं - तृष्णारहितं । भव - एधि । अहहेतिहर्षे । मे - मम । वामकः - सव्यः । दक्षिणव्यतिरिक्तइत्यर्थः ॥ नि ॥ वामंशरीरेसव्यंस्यादित्यमरः ॥ अपाङ्गकः - नेत्रान्तः । किमपि - किंचित् ।

स्फुरति - स्पन्दति । स्त्रीणां वामभागस्पन्दनंहि अभीष्टसमागमसूचकं । ततश्च पुनराशंसे प्रियसमागमो मे भविष्यतीति । सः - प्रसिद्धः । चिरदृष्टः -चिरकालस्यप्रेक्षितः । एषः-प्रियः । कथं-केनप्रकारेण । पुनः-भूयः । द्रष्टव्यः - साक्षात्प्रेक्षणीयः । भवतीतिशेषः । हे नाथ - प्रिय । पराधीनां-अन्याधीनां । मां । त्वयिविषये - भवद्विषये । सतृष्णाम् - आशासहितां । गणय - अवेहि । ततः - अनन्तरम् । यथारसम् - तत्तद्रसानुगुण्येन । अभिनयति - व्यञ्जकव्यापारंकरोति ॥ अत्ररसोऽ योगविप्रलम्भशृङ्गारः ॥ यथोक्तम् ॥ अप्राप्ति विप्रलम्भस्स्या यूनोर्जाताभिलाषयोः । विप्रलम्भस्य भेदास्स्यु रयोगोविरहस्ततः ॥ प्रवासश्चाथकरुणा मानश्चेति च षण्मताः । तत्र । सम्प्राप्तेः प्रागसङ्गोय स्तमयोगंप्रचक्षत इति । अत्रचतुष्पद्याः पादचतुष्टये क्रमेण निर्वेद स्सविस्मयोहर्ष श्चिन्तादैन्यंचेति सञ्चारिभावा स्तदनुभावै र्मुखरागादिभि स्सम्यक् प्रकाशिता इत्यनुसन्धेम् । तेषां लक्षणमुक्तं वसन्तराजीये ॥ इष्टार्थविरहव्याधिनिन्दासदवमाननैः । दारिद्र्य सन्तापनाश परवृ द्ध्यवलोकनैः । निष्फलत्वमति र्नृणां निर्वेदोजीवितादिषु ॥ अत्रेष्टार्थविरहजनितो निर्वेदः । अन्त र्बाष्पोपमध्यान निश्वासस्वावमाननैः । दैन्यगद्गदवैवर्ण्यै रभिनेयोभवेदयं । हर्षोमन स्समुल्लासो गुरुदेवमहीभुजां । प्रसादा त्प्रियसङ्गाच्च भवेदिष्टार्थलाभतः । अत्रेष्टार्थलाभजनितो हर्षः । अपाङ्गस्फुरणस्य इष्टार्थलाभहेतुत्वात् । मुखे नेत्रे प्रसन्नत्वा त्प्रियोक्तिपुलकोद्गमैः । दान त्याग परीरम्भै रभिनेयोभवेदयम् । इष्टालाभा दिष्टनाशा दनिष्टाप्ते श्च दैन्यतः । चित्त स्यैकाग्रताचिन्ता । अत्रचिन्ताइष्टालाभजनिता । स्मरणञ्चानुस्मृतिः । सन्तापोच्छ्वास निश्वासा नंत्यमिंद्रियकर्मणाम् । अधोमुखत्व मित्याद्यै रभिनेयोभवेदयम् ॥ अनौजस्त्वंतुमनसो दैन्यमि त्यभिधीयते । अत्रौत्सुक्यजनितं दैन्यम् । अङ्गानामपिशैथिल्यं देहसंस्कारवर्जनम् । अञ्चितंभरतेस्मिन्वै अनुभावाःप्रदर्शिताइति ॥

---

विदू ॥ ( अपवार्य ) भोवअस्स ! चदुप्पदवत्थअं दुवारीकरिअ तुइ उवट्ठाविदोविअ अप्पा अत्तभोदीए । छ ॥ ... भो

वयस्य ! चतुष्पदावस्थाकं द्वारीकृत्य त्व य्युपस्थापितइ वा त्मात्रभवत्याः ॥

---

विदूषकइति ॥ विदूषकः । अपवार्य - जनांतिकं । वदति । भोवयस्य - हेसखे । अत्रभवत्याः - पूज्यायामाळविकायाः । आत्मा-देहः। ॥ नि ॥ आत्माजीवेधृतौदेहे स्वभावेपरमात्मनीतिविश्वः ॥ चतुष्पदाव स्थाकम् - चत्वारिपदानिपादाएव अवस्थाः - वैराग्यौ त्सुक्यसंकल्पात्मस मर्पणरूपायस्मिंस्तत्तादृशंपद्यं । द्वारीकृत्य - तद्व्याजेनेत्यर्थः । त्वयि । उप स्थापितः - उपायनीकृतइवस्थितः ॥

---

राजा ॥ सखे ! एव मावयो र्हृदयम् । अनया खलु ॥

श्लो ॥ जन मिम मनुरक्तं विद्धि नाथेति गेये
वचन मभिनयन्त्या स्वांगनिर्देशपूर्वम् ।
प्रणयगति मदृष्ट्वा धारिणीसन्निकर्षा
दहमिव सुकुमारप्रार्थनाव्याज मुक्तः ॥२६॥

---

राजेत्यादि ॥ राजा । प्राह । हे सखे - वयस्य । आवयोः - तस्याममचेत्यर्थः । हृदयम् - चित्तम् । एवम् -इत्थमन्योन्यासक्तमित्यर्थः । तथाहि । हे नाथ - प्रिय । इमं जनं- मामित्यर्थः । अनुरक्तं - प्रेमयुक्तं । त्वयीतिशेषः । विद्धि - जानीहि । इति -एवंविधे । गेये - णाहममूइत्या दिगीते । वचनम् - वाक्यं । स्वाङ्गनिर्देशपूर्वम् - आत्मशरीरप्रदर्शनपूर्वकं यथाभवतितथा । अभिनयन्त्या - हस्तादिभि र्व्यंजयन्त्या । अनया - मा ळविकया । धारिणीसन्निकर्षात् - धारिण्याः - एतदाख्यायादेव्याः । सन्नि कर्षात् - सन्निधानाद्धेतोः । प्रणयगतिं - मत्स्नेहप्रवृत्तिं । अदृष्ट्वा - अज्ञा त्वा । सुकुमारप्रार्थनाव्याजं - सुकुमारा -कोमला । याप्रार्थना-याच्ञा । साव्याजः - मिषोयस्मिन्कर्मणितद्यथाभवतितथा । अहम् । उक्तः - अभि हितइवखलु ॥

( मालविका गीतांते निष्क्रमितु मारब्धा )॥

मालविकेति ॥ मालविका । गीतांते -चतुष्पदीगानानन्तरम् । निष्क्रमितुं - निर्गंतुम् । आरब्धा- उद्युक्ता ॥

विदू ॥ भोदि चिठ्ठ । किंपि वो विसुमरिदो तत्त कम्मभेदो । तंदाव पुच्छिस्सं । छा ॥ भवति तिष्ठ । किमपि वो विस्मृतः तत्र कर्मभेदः । तंताव प्रक्ष्यामि ॥

विदूषकइति ॥ विदूषकः । प्राह । भवति - पूजयेमालविके । तिष्ठ - अत्रस्थाभव । वः - युष्माकम् । कर्मभेदः - क्रियाविशेषः । किमपि - किंचित् । विस्मृतः- विस्मृतिङ्गतः । तम् - कर्मभेदम् । तावदिदानीं । प्रक्षयामि - परीक्षिष्ये ॥ प्रश्नव्याजेन कियत्पर्यंतं मालविकास्थापनार्थमिदं विदूषकवचनमितिज्ञेयम् ॥

गण ॥ वत्से ! क्षणमात्रंस्थि त्वोपदेशविशुद्धा यास्यसि ॥

गणदासइति ॥ गणदासः । वक्ति । हे वत्से - बाले । क्षणमात्रम्- क्षणपरिमितंकालं । स्थित्वा - उषित्वा । उपदेशविशुद्धा - उपदेशे - विद्याग्रहणे । विशुद्धा - दोषरहितासती । यास्यसि - गमिष्यसि ॥

( मालविकास्थिता )

मालविकेति ॥ मालविका । स्थिता - निवृत्तेत्यर्थः ॥

राजा ॥ स्वगतम् ॥ अहो सर्वास्ववस्थासु चारुता शोभांतरं पुष्यति । तथाहि ॥

श्लो ॥ वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे

कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादांगुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्यादस्याःस्थितमतितरांकान्तमृज्वायतार्धं ॥२७

राजेति ॥ राजा । स्वगतम् - आत्ममात्रावगतं यथाभवतितथा । आह । चारुता - सौन्दर्यम् । सर्वासु - समस्तासु । अवस्थासु - समयेषु । शोभान्तरं - विलक्षणप्रकाशम् । पुष्यति - वर्धयति । तथाहि - तदेवोपपादयति । वाममिति ॥ सन्धिस्तिमितवलयं - सन्धौ - प्रकोष्टे । स्तिमितानि - निश्चलानि । वलयानि - कटकानियस्मिन्तंतथोक्तं । वामं - दक्षिणेतरं । हस्तं - पाणिं । नितम्बे - कटिपश्चाद्भागे । न्यस्य - निक्षिप्य । श्यामाविटपसदृशं - फलिनीशाखासन्निभं । द्वितीयं - दक्षिणहस्तं । स्रस्तमुक्तम् - स्रस्तम् - गळितंयथातथा । मुक्तं - विसृष्टं । लम्बितमित्यर्थः । कृत्वा - विधाय । पादांगुष्ठालुलितकुसुमे - पादांगुष्ठेन - चरणप्रथमांगुल्या । आलुलितानि - संमृष्टानि । कुसुमानि - पुष्पाणियस्यतस्मिन् । कुट्टिमे - शिलानिबद्धप्रदेशे । पातिताक्षं - प्रसारितनेत्रंयथातथा । ऋज्वायतार्धं - ऋजु - अवक्रम् । आयतम् - दीर्घञ्च । अर्धम् - ऊर्द्ध्वपरिभागोयस्यतत्तथोक्तम् । अस्याः - माळविकायाः । स्थितम् - अवस्थानम् । नृत्यात् - नर्तनादपि । अतितराम् - अत्यन्तम् । कांतं - मनोहरं । भवतीतिशेषः ॥ अत्रवाक्यस्य विशेषितत्वात्पुष्पंनाम सन्ध्यङ्गमुक्तंभवति ॥

देवी ॥ णं गोदमवअणंपि अज्जो हिअए करेदि ॥ छा ॥
ननु गौतमवचनमप्यार्यो हृदये करोति ॥

देवीति ॥ देवी - पट्टमहिषी । वक्ति । आर्यः - महाराजः । गौतमवचनम् - गौतम नामक विदूषकवाक्यमपि । हृदये - चेतसि । करोतिननु - निदधातिकिम् । आलोचयतिकिमित्यर्थः ॥

गण ॥ देवि ! मामैवम् । देवप्रत्यया त्सम्भाव्यतेसूक्ष्मद र्शिता गौतमस्य । पश्य ॥

श्लो ॥ मन्दोऽ प्यमन्दता मेति संसर्गेण विपश्चितः ।
पंकच्छिदः फलस्येव निकषे णाविलं पयः ॥२८॥

( विदूषकंविलोक्य ) त च्छृणुमो वयं विवक्षित मार्यस्य ॥

---

गणदासइति ॥ गणदासः - नाट्याचार्यः । वक्ति । किमिति । हे देवि । एवम् - अनेनप्रकारेण । मामा - नवक्तव्यम् । सम्भ्रमाद्विरुक्तिः । देवप्रत्ययात् - महाराजविश्वासात् । गौतमस्य - एतन्नाम्नोविदूषकस्य । सूक्ष्म दर्शिता - विशेषज्ञत्वं । सम्भाव्यते - ऊह्यते । पश्य - अवेहि । मन्दइति ॥ पंकच्छिदः - कर्दमहरस्य । कतकवृक्षस्येतिभावः । फलस्य - स्पष्टोर्थः । निकषेण - घर्षणेन । आविलम् - कलुषम् ॥ नि ॥ कलुषोऽ नच्छआविल इत्यमरः ॥ पयः - उदकमिव । विपश्चितः - विदुषः ॥ नि ॥ विद्वान्विप श्चि द्दोषज्ञ इत्यमरः ॥ संसर्गेण - सहवासेन । मन्दः - मूढोपि । अमन्दतां - व्यक्ततां । एति - प्राप्नोति । अतः । एवंनवक्तव्यमितिपूर्वेणानुषङ्गः । अथविदूषकं । विलोक्य - वीक्ष्य । प्राह । तत् - तस्मात् । वयं । आर्य स्य - पूज्यतमस्य । तव । विवक्षितं - वक्तुमिष्टमर्थं । शृणुमः - आकर्णयामः । वदेतिशेषः ॥ अस्यवाक्यस्योपपत्तिमत्त्वादुपन्यासोनामसन्ध्यङ्गमुक्तंभवति ॥

---

विदू ॥ ( गणदासं विलोक्य ) कोसिइंदाव पुच्छ । पच्छा जो मए कम्मभेदो दिट्ठो तं भणिस्सं ॥ छा ॥ ⋯ कौशिकींताव त्पृच्छ । पश्चा द्यो मया कर्मभेदो दृष्ट स्तं भणिष्यामि ॥

---

विदूषकइति ॥ विदूषकः । गणदासं । विलोक्य - वीक्ष्य । प्रा ह । नाट्याचार्य । तावत् - प्रथमम् । कौशिकीं - पण्डितकौशिकीं । पृच्छ - प्रश्नंकुरु । पश्चात् - अनन्तरं । मया । यःकर्मभेदः - क्रियावैलक्षण्यं । दृष्टः -

आलोकितः । तम् - कर्मभेदम् । भणिष्यामि - वदिष्यामि ॥

---

गण ॥ भगवति ! यथादृष्ट मभिधीयतां गुणोवा दोषोवेति॥

---

गणदासइति ॥ गणदासः । प्राह । हे भगवति-पूजयेपरिव्राजिके । गुणः - सदुपदेशत्वंवा । दोषः - दोषसहितत्वंवा । इति - एवं । यथादृष्टम् -येनप्रकारेणवीक्षितम् । अभिधीयतां-तयोच्यतां । त्वयेतिशेषः ॥

---

परि ॥ यथादर्शितं सर्व मनवद्यम् । कुतः ॥

श्लो ॥ अंगै रन्तर्निहितवचनै स्सूचित स्सम्य गर्थः
पादन्यासो लय मुपगत स्तन्मयत्वं रसेषु ।
शाखायोनि र्मृदु रभिनय स्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषया द्रागबन्धस्सएव ॥२९॥

---

परिव्राजिकेति ॥ परिव्राजिका । कथयति । हे नाट्याचार्य । यथा - येनप्रकारेण । दर्शितं - दृष्टिपथंप्रापितम् । त्वयेतिशेषः । सर्वं- तत्समस्तम् । अनवद्यम् - दोषरहितम् । कुतः - कस्मादितिचेत् । अङ्गैरिति ॥ अन्तर्निहितवचनैः - अन्तर्गतवाक्यैः । अङ्गैः- हस्तमुखनेत्रादिभिः । अर्थः - अभिनेयपदार्थः । सम्यक् - साधु । सूचितः -वचनंविनापि विन्यासविशेषेणबोधितः । पादन्यासः -चरणविक्षेपः । लयम् - मानम् । ताळसाम्यमितियावत् । उपगतः - प्राप्तः । रसेषु - शृङ्गारादिरसेषु । तन्मयत्वम् - तत्स्वरूपत्वं । तदाविर्भावव्यञ्जनायेत्यर्थः । शाखायोनिः - शाखाप्रभवः । शाखानामनृत्तहस्तानामादृतमानप्रचारः । तथाचोक्तम् । सा शाखानृत्तहस्तानां यामात्राचित्तनर्तनेति ॥ तथाभूतस्सन् । अभिनयः - अर्थव्यञ्जकश्चेष्टाविशेषः । मृदुः - सुकुमारः । तद्विकल्पानुवृत्तौ - तस्य - अभिनयस्य । योविकल्पः - भेदः । तस्यअनुवृत्तिः - अनुसरणम् । तस्यां सत्यां । भावः -अभिनीयमानोनिर्वेदादिः । विषयात् - प्रकृताश्रयात् । भावम् - पूर्वाभिनीतसंचारिणम् । नुदति - अपाकरोति । रागबन्धः - रञ्जक

स्वयोगः । सः - पूर्वं यादृशस्तादृशएव ॥

---

गण ॥ देवः कथंवा मन्यते ॥

---

गणदासइति ॥ गणदासः । ब्रवीति । देवः - महाराजः । कथम् - केनवाप्रकारेण । मन्यते - जानीते । उपदेशविषयइतिशेषः ॥

---

राजा ॥ वयं स्वपक्षे शिथिलाभिमाना स्संवृत्ताः ॥

---

राजेति ॥ राजा । प्राह । वयं । स्वपक्षे - आत्मीयपक्षे । शिथिलाभिमानाः - क्षीणाभिमानाः । संवृत्ताः - जाताः ॥

---

गण ॥ अद्य नर्तयि तास्मि ॥

श्लो ॥ उपदेशं विदु श्शुद्धं सन्त स्त मुपदेशिनः ।
श्यामायते न विद्वत्सु यः काञ्चनमि वाग्निषु ॥३०॥

---

गणदासइति ॥ गणदासः । वक्ति । अहम् । अद्य - इदानीं । नर्तयिता - नाट्याध्यापकः । अस्मि - भवामि । कुतः । उपदेशमिति ॥ सन्तः - विद्वांसः । उपदेशिनः - उपाध्यायस्य । तम् - उपदेशं - विद्याप्रदानम् । शुद्धम् - स्वच्छम् । विदुः - जानन्ति । यः - उपदेशः । अग्निषु - वह्निषु । काञ्चनम् - सुवर्णमिव । विद्वत्सु - युष्मादृशेषु - बुधेषु । नश्यामायते - मलिनंनभवति ॥

---

देवी ॥ दिठ्ठिआ अपरिक्खिआराहणेण अज्जो वड्ढदु ।छा॥ दिष्टया अपरिक्षताराधनेन आर्योवर्धताम् ॥

---

देवीति ॥ देवी - पट्टमहिषी । वदति । आर्यः - पूज्यो नाट्याचार्यः । दिष्ट्या - दैवेन । अपरिक्षताराधनेन - भङ्गरहितसंभावनया । वर्धताम् - अभ्युदयम्प्राप्नुयात् । अधीष्टेलोट् ॥

---

गण ॥ देवि ! त्वत्परिग्रहोऽपि मे वृद्धिहेतुः । ( विदूषकं विलोक्य ) गौतम ! व देदानीं य स्तेमनसि वर्तते ॥

---

गणदासइति ॥ गणदासः । ब्रूते । हे देवि - पट्टमहिषि । त्वत्परिग्रहः - तवपरिजनत्वेनस्वीकारोपि । मे - मम । वृद्धिहेतुः - अभ्युदयकारणम् । इत्युक्त्वा । विदूषकम् । विलोक्य - वीक्ष्य । वक्ति । हे गौतम । ते - तव । मनसि - चित्ते । यत् - आलोचनं । वर्तते - विद्यते । तत् । इदानीं - अद्य । वद - ब्रूहि ॥

---

विदू ॥ पढमोवदेसदंसणे पढमं बम्हणपूजा कादव्वा । सा णं वो विसुमरिदा ।छा॥ प्रथमोपदेशदर्शने प्रथमं ब्राह्मणपूजा कर्तव्या । सा ननु वो विस्मृता ॥

---

विदूषकइति ॥ विदूषकः । कथयति । प्रथमोपदेशदर्शने-आद्य विद्याग्रहणपरीक्षायां । ब्राह्मणपूजा - भूसुरार्चना । प्रथमम् - आदौ । कर्तव्या - विधेया । सा - पूजा । वः - युष्माकं । युष्माभिरित्यर्थः । संबंधसामान्येषष्ठी । विस्मृताननु - विस्मृतिंगताहि ॥

---

परि ॥ अहो प्रयोगाभ्यन्तरः प्रश्नः ॥

---

परिव्राजिकेति ॥ परिव्राजिका । वक्ति । प्रश्नः-विदूषककृतोऽनुयोगः । प्रयोगाभ्यन्तरः - नाट्यप्रयोगसन्निकटस्थः । अहो - आश्चर्यम् । अत्र परिहासस्य गम्यमानत्वात् नर्मेति सन्ध्यङ्गमुक्तंभवति ॥

---

( सर्वेप्रहसिताः । माळविकापि स्मितं करोति ) ॥

---

सर्वइति ॥ सर्वे - तत्रत्या स्समस्तजनाः । प्रहसिताः - प्रहसंकृ

तवन्तः। माळविकापि-एतन्नामिकाबालिकाच। स्मितम् - मन्दहासम्। करोति - विदधाति ॥

---

राजा ॥ स्वगतम् ॥ उपात्तसार श्चक्षुषा मे स्वविषयः। य दनेन ॥

श्लो॥ स्मयमान मायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखं।
असमग्रलक्ष्यकेसर मुच्छ्वसदिव पंकजं दृष्टम् ॥२१॥

---

राजेति ॥ राजा - नृपः। स्वगतम् - आत्मगतंप्राह। मे - मम। चक्षुषा - नयनेंद्रियेण। स्वविषयः - आत्मीयगोचरः। रूपमित्यर्थः। उपात्तसारः - गृहीतैकांशः। यत् - यस्मात्। अनेन - चक्षुषा। अस्यपदस्य श्लोकस्थेनदृष्टामि त्यनेनान्वयः॥ स्मयमानमिति। स्मयमानम् -स्मितंकुर्वाणम्। अतएव। किञ्चिदभिव्यक्तदशनशोभि - किञ्चिदीषत्। अभिव्यक्ताः - परिस्फुटाःयेदशनाः - रदनाः। तैश्शोभतइतितथोक्तम्। आयताक्ष्याः - विशाललोचनायाः माळविकायाः। मुखं - वदनं। उच्छ्वसत् - विकसत्। अतएव। असमग्रलक्ष्यकेसरम् - ईषद्दृश्यकिञ्जल्कं। पङ्कजं - पद्ममिव। दृष्टं - विलोकितम् ॥

---

गण ॥ महाब्राह्मण! नखलु प्रथमं नैपथ्यप्रदर्शन सवनमिदम्। अन्यथा कथं त्वां दक्षिणीयं नार्चयिष्यामः ॥

---

गणदासइति ॥ गणदासः। प्राह। हे महाब्राह्मण - उत्तमविप्र। इदम् - एतत्। नैपथ्य प्रदर्शनसवनं - भूमिकाप्रदर्शनयजनं। प्रथमम् - आद्यम्। नखलु - नभवतिहि। अन्यथा - तथैवनोचेत्। दक्षिणीयं - दक्षिणाग्रहणार्हं। त्वां। कथम्-केनहेतुना। नार्चयिष्यामः - नाराधयिष्यामः॥

---

विदू ॥ मएणाम सुक्खगणगज्जिदे अन्तरिक्खे जलपा

णेण चादआइदं ।छा॥ मयानाम शुष्कघनगर्जि तेऽन्तरिक्षे जलपानेन चातकायितम् ॥

---

विदूषकइति ॥ विदूषकः । प्राह । मया । शुष्कघनगर्जिते - निष्फलमेघस्तनिते । अन्तरिक्षे - गगने । जलपानेन - नीरग्रहणेन । चातकायितंनाम - चातकविहङ्गवदाचरितंहि ॥

---

परि ॥ एव मेव ॥

---

परिव्राजिकेति ॥ परिव्राजिका - पण्डितकौशिकी । वक्ति । हे विदूषक । एवम् - इत्थमेव । त्वदुक्तमितिशेषः ॥

---

विदू ॥ तेणहि पण्डिदपरितोसप्पच्चआ णं मूढा जादी । जदि अत्तभोदीए शोहणं भणिदं, तदो, इमं से पारितोसिअं पअच्छामि(इतिराज्ञोहस्ता त्कटकमाकर्षति)छा॥ तेनहि पण्डितपरितोषप्रत्यया ननु मूढा जातिः । य यत्रभवत्या शोभनं भणितं तत इद मस्यै पारितोषिकं प्रयच्छामि ... ॥

---

विदूषकइति ॥ विदूषकः । ब्रूते । तेनहि - तेनहेतुना । मूढा - सदसद्विवेकरहिता । जातिः - मादृशोजनः । पण्डितपरितोषप्रत्याननु - पण्डितानां - विबुधानां । परितोषः - सन्तोषएव । प्रत्ययः - विश्वासो यस्यास्तथाभूताहि । अत्रभवत्या - पूजययात्वया । शोभनं - इदंनाट्यंसम्यगिति । भणितंयदि - उक्तंचेत । ततः - तर्हि । अस्यै-एतस्यैमाळविकायै । इदम् - एतत् । पारितोषिकम् - उपायनम् । प्रयच्छामि - ददामि । इति - एवमुक्त्वा । राज्ञः - नृपस्य । हस्तात् - करात् । कटकम् - वलयम् । आकर्षति - आहरति ॥

---

देवी ॥ चिठ्ठ गुणंतरं अजाणंतो किंणिमित्तं तुमं आहरणं देसि । छा ॥ तिष्ठ गुणान्तर मजानन् किंनिमित्तं त्व माभरणं ददासि ॥

---

देवीति ॥ देवी- पट्टमहिषी । वक्ति । हे विदूषक । तिष्ट - विरम । गुणान्तरम् - गुणविशेषम् । अजानन् - अविदन् । त्वम् । आभरणम् - वलयरूपमलंकारं । किंनिमित्तं - किमर्थं । ददासि - प्रयच्छसि ॥

---

विदू ॥ परकेरन्ति करिअ । छा ॥ परकीयमिति कृत्वा ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । देवि । परकीयं - अन्यदीयमिति । कृत्वा - विचार्य । प्रयच्छामीतिशेषः ॥

---

देवी ॥ (आचार्यं विलोक्य) अज्ज ! गणदास ! णं दंसिदोवदेसा दे सिस्सा । छा ॥ आर्य ! गणदास ! ननु दर्शितोपदेशा ते शिष्या ॥

---

देवीति ॥ देवी - पट्टमहिषी । आचार्यं - नाट्योपाधघ्यायं । विलोक्य - वीक्ष्य । प्राह । आर्य - पूज्य । हे गणदास । ते - तव । शिष्या - छात्रामाळविका । दर्शितोपदेशाननु - परीक्षितनृत्यविद्याकिम् ॥

---

गण ॥ वत्से ! एहि गच्छाव इदानीम् ॥

---

गणदासइति ॥ गणदासः । वदति । वत्से - बालिके । एहि - आगच्छ । इदानीम् - अद्य । गच्छावः - यावः । आवामितिशेषः ॥

---

( सहाचार्येण निष्क्रान्ता माळविका ) ॥

---

सहेति ॥ माळविका । आचार्येणसह - उपाध्यायेनसार्कं । निष्क्रान्ता - निर्गता ॥ अनेन माळविकानिर्गमनहेतुना देवी वचनेन राज्ञो हितरोधना न्निरोधोनाम सन्धयङ्गमुक्तंभवति ॥

---

विदू ॥ ( जनांतिकम् ) एत्तिओ मे मदिविहवो भवंतं सेविदुं । छा ॥ ... एतावा न्मे मतिविभवो भवन्तं सेवितुम् ॥

---

विदूषकइति ॥ विदूषकः । जनांतिकम् - नियतश्राव्यं यथातथा । ब्रूते । हे राजन् । भवन्तम् - त्वाम् । सेवितुं - आराधयितुं । मे - मम । मतिविभवः - प्रज्ञासामर्थ्यं । एतावान् - इयानेव ॥

---

राजा ॥ अलमलं परिच्छेदेन । अहंहि ॥

श्लो ॥ भाग्यास्तमयमि वाक्ष्णो

हृदयस्य महोत्सवावसानमिव ।

द्वारपिधानमिव धृते

र्मन्ये तस्या स्तिरस्करिणीम् ॥३२॥

---

राजेति ॥ राजा । प्राह । हे विदूषक । परिच्छेदेन - एतावानिति इयत्ताकरणेन । अलं - नकार्यमित्यर्थः । आदराद्विरुक्तिः । अहंहि - अहंतु । भाग्येति ॥ तस्याः -माळविकायाः । तिरस्करिणीं -यवनिकां । लक्षणयातत्कृतनिरोधानमित्यर्थः । अक्ष्णोः - नेत्रयोः । भाग्यास्तमयं-भाग्यस्य - भागधेयस्य । अस्तमयं-नाशमिव । हृदयस्य - मनसः । महोत्सवावसानम् - महोत्सवस्य - आनन्दस्य । अवसानं - विराममिव । धृतेः - सन्तोषस्य । द्वारपिधानम् - द्वारस्य - प्रवेशमार्गस्य । पिधानं-तिरोधानमिव । मन्ये - तर्कयामि ॥ तस्या अदर्शने नेत्रं विफलमिव , हृदयं निरानन्दमिव , सन्तोष मावृतमिवचमन्ये इत्याशयः ॥ अत्रार्ते र्गम्य मानत्वा द्विधुतंनाम सन्ध्यङ्गमुक्तंभवति ।

विदू ॥ ( जनांतिकम् ) साधु दरिद्दादुरोविअ वेज्जेण ओसहं उप्पादीअमाणं इच्छसि । छा ॥ ··· साधु दरिद्रातुरइव वैद्ये नौषध मुत्पाद्यमान मिच्छसि ॥

विदूषकइति ॥ विदूषकः । जनांतिकम् -नियतश्राव्यम् । आह । दरिद्रातुरः - निर्धनरोगीव । त्वं । वैद्येन - चिकित्सकेन । औषधं। उत्पाद्यमानम् - सम्पाद्यमानम् । इच्छसि - वाञ्छसि । साधु - सम्यगेव स्थितम् । विपर्ययलक्षणया नसम्यगित्याशयः ॥

प्रविशय हरदत्तः ॥ देव ! मदीय मिदानीं प्रयोग मवलोकयितुं प्रसादः क्रियताम् ॥

प्रविशयेति ॥ हरदत्तः - एतन्नामको द्वितीयनाट्याचार्यः । प्रविश्य - रङ्गस्थलम्प्राप्य । प्राह । देव - महाराज । इदानीं - अद्य । मदीयं -मत्सम्बंधिनं । प्रयोगम् - नाट्यप्रयोगम् । अवलोकयितुं - प्रेक्षितुं । प्रसादः - अनुग्रहः । क्रियतां - विधीयताम् ॥

राजा ॥ ( स्वगतम् ) अवसितो मे दर्शनार्थः । ( दाक्षिण्य मवलम्ब्य प्रकाशम् ) ननु पर्युत्सुकाएव वयम् ॥

राजेति ॥ राजा । स्वगतम् - आत्मगतम् । पर्यालोचयति । यथा । दर्शनार्थः - विद्याप्रदर्शनप्रयोजनम् । अवसितः - समाप्तः । दाक्षिण्यं - सर्वत्रसमबुद्धिं । अवलम्ब्य - आश्रित्य । प्रकाशं - सर्वश्राव्यं । प्राह । ननु - हरदत्त । वयं । पर्युत्सुकाः - त्वन्नाट्यविद्याप्रदर्शने समुत्कण्ठिताएव ॥

हर ॥ अनुगृहीतोऽस्मि ॥

---

हरदत्तइति ॥ हरदत्तः । प्राह । महाराज । अनुगृहीतः - अभ्युपपन्नः । अस्मि - भवामि ॥

---

नेपथ्ये ॥ जयतु जयतु देवः । उपारूढो मध्याह्नः । तथाहि ॥

श्लो ॥ पत्रच्छायासु हंसा मुकुळितनयना दीर्घिकापद्मिनीनां
सौधा न्यत्यर्थतापा द्वलभिपरिचयद्वेषिपारावतानि ।
बिंदूत्क्षेपा त्पिपासुः परिसरति शिखी भ्रांतिमद्वारियंत्रं
सर्वै रुस्रै स्समग्र स्त्वमिव नृप ! गुणै र्दीप्यतेसप्तसप्तिः ॥

---

नेपथ्यइति ॥ नेपथ्ये - यवनिकाभ्यन्तरे । वैतालिकआहेतिवाक्यशेषः । देवः - महाराजः । जयतु - सर्वोत्कर्षेण वर्ततां । आदराद्विरुक्तिः । आशीरर्थेलोट् । मधयाह्नः-मधयन्दिनम् । उपारूढः - उपागतः । तथाहि - तदेवोपपादयति । पत्रेत्यादि ॥ हंसाः - चक्राङ्गाः ॥ नि ॥ हंसास्तुश्वेतगरुत श्चक्राङ्गामानसौकस इत्यमरः ॥ दीर्घिकापद्मिनीनां - वापीनलिनीनां । पत्रच्छायासु - पत्राणां - नलिनीदळानां । छायासु - अधः प्रदेशेषु । मुकुळितनयनाः - निमीलितनेत्रास्सन्तः । तिष्ठन्तीतिशेषः । सौधानि - राजसदनानि । अत्यर्थतापात् - अतिमात्रोष्णत्वात् । वलभिपरिचयद्वेषिपारावतानि - वलभिपरिचये - वळीकनिवासे । द्वेषिणः - अननुरक्ताः । पारावताः - कलरवाः । येषुतानि । तथाभूतानि । भवन्तीतिशेषः । शिखी - मयूरः । पिपासुः - पातुमिच्छुस्सन् । बिन्दूत्क्षेपात् - जलकणानामूर्ध्वप्रसरणात् । भ्रान्तिमत् - भ्रमणयुक्तं । वारियन्त्रम् - जलधारायन्त्रम् । परिसरति - उपसर्पति । हे नृप - राजन् । सप्तसप्तिः - सूर्यः । गुणैः-शौर्यादिभिः । समग्रः - संपूर्णः । त्वमिव । उस्रैः - किरणैः । समग्रस्सन् । दीप्यते - प्रभासते ॥

---

विदू ॥ अविहा अविहा। अम्हाणं उण भोअणवेळा। अत्तभवदो उइदवेळादिक्कमेण चिकिस्सआ दोसं उदाहरंति। हरदत्त ! किं भणासि। छा ॥ अपिहा अपिहा। अस्माकंपुन र्भोजनवेळा। अत्रभवत उचितवेळातिक्रमेण चिकित्सका दोष मुदाहरन्ति। हरदत्त ! किं भणसि ॥

---

विदूषकइति ॥ विदूषकः। वक्ति। अपिहेतिविषादे। हन्तेत्यर्थः। अस्माकंपुनः-अस्माकंतावत्। भोजनवेळा-अभ्यवहारसमयः। उपस्थितेतिशेषः। अत्रभवतः-पूजयस्यराज्ञः। उचितवेळातिक्रमेण-अभ्यस्तकालातिपातेन। नि ॥ अभ्यस्ते प्युचितंन्याय्य मित्यमरः॥ चिकित्सकाः-वैद्याः। दोषम्-अनारोग्यम्। उदाहरन्ति-वदन्ति। तस्मात्। हे हरदत्त। त्वं। किं भणसि-किंवावदसि। वदेतिशेषः॥

---

हर ॥ अस्ति चान्यस्य वचनावका शोऽत्र ॥

---

हरदत्तइति ॥ हरदत्तः। ब्रवीति। अत्र-अस्मिन्विषये। अन्यस्य-अङ्गीकारातिरिक्तस्य। वचनावकाशः-भाषणावसरः। अस्ति-वद्यतेकिमितिकाकुः॥

---

राजा ॥ (हरदत्त मवलोक्य) तेनहि त्वदीय मुपदेशं श्वो द्रक्ष्यामः। विरमतु भवान् ॥

---

राजेति ॥ राजा। हरदत्तमवलोकय-वीक्षय। प्राह। तेनहि-तेनहेतुना। त्वदीयं-भवदीयम। उपदेशं-लास्यविद्योपदेशं। श्वः-परस्मिन् दिने। द्रक्षयामः-विलोकयिष्यामः। भवान्। विरमतु-तूष्णींभवतु ॥

---

हर ॥ य दाज्ञापयति देवः। (इति निष्क्रान्तः) ॥

---

हरदत्तइति ॥ हरदत्तः । देवः - महाराजः । यदाज्ञापयति - यदनुशास्ति । तत्करोमीति वाकयशेषः । इति- एवमुक्त्वा । निष्क्रान्तः - निर्गतः ॥

---

देवी ॥ णिव्वत्तेदु अज्जउत्तो मज्झण्णविहिं । छा ॥ निर्वर्तय त्वार्यपुत्रो मध्याह्न विधिम् ॥

---

देवीति ॥ देवी । कथयति । आर्यपुत्रः - महाराजः । मध्याह्नविधिं - मध्यन्दिनेकर्तव्यं स्नानभोजनादिकं । निर्वर्तयतु - निष्पादयतु ॥

---

विदू ॥ भोदी विसेसेण पाणभोअणं तुवरावेदु । छा ॥ भवती विशेषेण पानभोजनं त्वरयतु ॥

---

विदूषकइति ॥ विदूषकः । वदति । भवती । विशेषेण - अतिशयेन । पानभोजनं - पानकादिकंभक्षयादिकञ्च । त्वरयतु - सत्वरंनिर्वर्तयतु ॥

---

परि ॥ उत्थाय । स्वस्ति भवते । ( देव्यासह निष्क्रान्ता ) ॥

---

परिव्राजिकेति ॥ परिव्राजिका । भवते - तुभ्यं । स्वस्ति - शुभम् । अस्त्वितिशेषः । इति - एवं राजानमुक्त्वा । देव्यासह - पट्टमहिष्या सार्कं । निष्क्रान्ता - निर्गता ॥

---

विदू ॥ भो वअंस णकेवळं रूवे सिप्पेवि अदुदीआ माळविआ । छा ॥ भो वयस्य ! नकेवलं रूपे शिल्पेऽप्यद्वितीया माळविका ॥

---

विदूषकइति ॥ विदूषकः । प्राह । भोवयस्य - सखेमहाराज । माळविका । रूपेकेवलं - सौन्दर्यएव । न - अद्वितीया नभवति । परंतु । शिल्पे - नाट्यविद्यायामपि । अद्वितीया - समानद्वितीयवस्तुरहिता । निरुपमानेत्यर्थः ॥

---

राजा ॥ वयस्य ! ॥

श्लो ॥ अव्याज सुन्दरीं तां विज्ञानेन ललितेन योजयता ।
उपकल्पितो विधात्रा बाणः कामस्य विषदिग्धः ॥३४

किंबहुना सखे ! चिन्तयितव्योऽस्मि ते ॥

---

राजेति ॥ राजा । प्राह । हे वयस्य - सखे । अव्याजसुन्दरीम् - अकृत्रिमसौन्दर्ययुक्तां । तां - माळविकां । ललितेन -सर्वजनकमनीयेन । विज्ञानेन - सङ्गीतकलापरिज्ञानेन । योजयता -मेळयता । विधात्रा- ब्रह्मणा । कामस्य - मन्मथस्य । विषदिग्धः - क्ष्वेळलिप्तः । बाणः - शरस्सन् । उपकल्पितः - निर्मितः ॥ किंबहुना - अधिकेनोक्तेनकिंप्रयोजनं। सखे- गौतम । ते-तव । चिंतयितव्यः -संस्मरणीयः । अस्मि - भवामि ॥

---

विदू ॥ भवदावि अहं । दिढं विपणिकंदुविअ मे हिअअब्भंतरं डज्जदि । छा ॥ भवता प्यहं । दृढं विपणिकन्दुरिव मे हृदयाभ्यन्तरं दह्यते ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । राजन् । अहं । भवता - त्वयापि । चिन्तयितव्योऽस्मीति पूर्ववाक्यादनुषङ्गः । कुतः । मे- मम । हृदयाभ्यन्तरम्- उदरान्तराळम् । विपणिकन्दुः - पण्यवीधिकायां पिष्टपचनपात्रमिव ॥ नि ॥ ऋजीषं पिष्टपचनं कन्दु र्नास्वेदनीस्त्रिया मित्यमरः ॥ दृढं - गाढं । दह्यते - तप्यते । बुभुक्षयातीवपीड्यतइतिभावः ॥

---

राजा ॥ एवमेव । भवा नस्मदर्थे त्वरताम् ॥

---

राजेति ॥ राजा । प्राह । भवान् । एवम्-इत्थमेव । अस्मदर्थे - अस्मत्प्रयोजनेऽपि । त्वरताम् - अविलम्बंकरोतु । यथा स्वकार्ये भवान् त्वरते । तथा स्मत्कार्ये माळविकापुन दर्शनेत्वरता मित्याशयः । अत्रदृष्टनष्टस्य बीजस्य अनुसर्पणा त्परिसर्पइति सन्धयङ्गमुक्तंभवति ॥

---

विदू ॥ गहीददक्खिणोम्हि । किंतु मेहावळीणिरुद्ध जोण्हाविअ पराहीणदंसणा तत्तभोदी माळविआ । भवंपि सूणापरिसरचरोविअ गिद्धो आमिसलोलुवो भीरुओअ । अच्चंतादुरोविअ कज्जसिद्धिं पत्थंतो मे रोअसि । छा ॥ गृहीतदक्षिणोऽस्मि । किंतु मेघावळीनिरुद्धा ज्योत्स्नेव पराधीनदर्शना तत्रभवती माळविका । भवानपि सूनापरिसरचरइव गृध्र आमिषलोलुपो भीरुकश्च । अत्यन्तातुरइव कार्यसिद्धिं प्रार्थयमानो मे रोचसे ॥

---

विदूषकइति ॥ विदूषकः । कथयति । अहं । गृहीतदक्षिणः - स्वीकृतदक्षिणः । अस्मि - भवामि । किन्तु - परन्तु । मेघावळीनिरुद्धा - घनश्रेणीचूछन्ना । जयोत्स्ना - चंद्रिकेव । तत्रभवती - पूज्या । माळविका - एतन्नामिकाबालिका । पराधीनदर्शना - परायत्तप्रेक्षणा । भवानपि । सूनापरिसरचरः - मांसविक्रयस्थानसमीपवर्ती । गृध्रः-एतन्नामकःपक्षीव । आमिषलोलुपः - पललासक्तः । भीरुकः - भयशीलश्च । अत्यन्तातुरः - अतीव कार्यासक्तइव । कार्यसिद्धिं - क्रियानिष्पत्तिं । प्रार्थयमानः - इच्छन् । मे - मह्यं । रोचसे - प्रतिभासि ॥ राजपक्षे आमिषलोलुपत्वं भोग्यवस्तुलालसत्वमितिज्ञेयम् ॥ अत्रसान्त्वनस्य गम्यमानत्वा त्पर्युपासनंनाम सन्धयङ्गमुक्तंभवति ॥

---

राजा ॥ कथ मनातुरो भविष्यामि ॥

श्लो ॥ सर्वान्तःपुर वनिताव्यापारंप्रति निवृत्त हृदयस्य ।
सा वामलोचना मे स्नेह स्यैकायनीभूता ॥३८॥

---

राजेति ॥ राजा - अग्निमित्रः । प्राह । किमिति । कथं - केनप्रकारेण । अहम् । अनातुरः - अनासक्तः । भविष्यामि - सम्पत्स्ये। सर्वेति ॥ यतः । सर्वांतःपुरवनिता व्यापारं - सर्वासु - समस्तासु । अन्तःपुरवनितासु - शुद्धान्तवधूजनेषु । योव्यापारः - प्रेमरूपावृत्तिः । तम्प्रति । निवृत्तहृदयस्य - निर्गतमनसः । मे - मम । स्नेहस्य - प्रेम्णः । सा - प्रसिद्धा । वामलोचना - माळविका । एकायनीभूता - केवलाश्रयीभूता ॥ ततः । कथमित्यादिना पूर्वेणानुषङ्गः ॥ अत्रां केमाळविकाया निष्क्रमणेन कथाविच्छेदेसति सर्वांतःपुरेत्यादिना गम्यमानो राज्ञोऽभिलषातिशय उत्तरांक कथाहेतुत्वा द्विन्दुरित्यनुसन्धेयम् ॥

---

इति निष्क्रान्तास्सर्वे ॥

---

इ ति द्वि ती यों ऽ कः ·

इति श्रीमन्मृत्युञ्जय निश्शंकक्षोणीपालविरचिते

माळविकाग्निमित्रव्याख्यानेविबुधरञ्जनी

स मा ख्या ने

द्वितीयोऽकः ·

श्रीरस्तु.

# माळविकाग्निमित्रम्.

## तृतीयोऽङ्कः.

ततः प्रविशति परिव्राजिकायाः परिचारिका समाहितिका ॥

कवि रिदानी मङ्कान्तर मारभमाणः कथासंघटनार्थं प्रवेशकं नामार्थोपक्षेपकं प्रस्तौति ॥ ततःप्रविशतीत्यादि ॥ ततः - अनन्तरम् । समाहितिका - एतन्नामिका । परिव्राजिकायाः -पण्डितकौशिकयाः । परिचारिका - चेटी । प्रविशति - रङ्गस्थलंप्राप्नोति ॥

समाहितिका ॥ आणत्तम्हि भअवदीए । समाहिदिए ! देवस्स उववणत्थं बीजपूरअं गेण्हिअ आअच्छेत्ति । तादाव पमदवणपालिअं महुअरिअं अण्णेसामि । (परिक्रम्यावलोकयच) एसा तवणीआसोअं आळोअन्ती महुअरिआ चिठ्ठदि । जाव णं संभावेमि । छा ॥ आज्ञप्तास्मि भगवत्या । समाहितिके! देवस्योपवनस्थं बीजपूरकंगृहीत्वागच्छेति । तत्ताव त्प्रमदवनपालिकां मधुकरिका मन्विष्यामि ... एषा तपनीयाशोक मवलोकयन्ती मधुकरिका तिष्ठति । यावदेनां सम्भावयामि ॥

समाहितिकेत्यादि ॥ समाहितिका । वक्ति । किमिति । हे समाहितिके । देवस्य - महारजस्य । उपवनस्थम् - उद्यानवनस्थितम् । बीजपूरकम् - फलपूराख्यंफलम् - ( आन्ध्रभाषायां जामिफलं, किंच मादीफलं ) ॥ नि ॥ फलपूरो बीजपूरो रुचको मातुलुङ्गक इत्यमरः ॥ गृही

त्वा - उपादाय । आगच्छ - आयाहीति । भगवत्या - पूजयया परिव्राजिकया । आज्ञप्ता - नियोजितास्मि । तत् - तस्मात् । तावत् - इदानीं । प्रमदवनपालिकाम् - आराम रक्षिणीम् । मधुकरिकाम् - एतदाख्यांस्त्रियं । अन्विष्यामि - विचिनोमि । इतिविचिन्त्य । परिक्रम्य - किंचिद्गत्वा । अवलोक्य - दृष्ट्वाच । वदति । एषा - इयम् । मधुकरिका । तपनीयाशोकम् - सुवर्णाशोकवृक्षम् । अवलोकयन्ती - पश्यन्तीसती । तिष्ठति - वर्तते । एनां - मधुकरिकां । यावत्सम्भावयामि - अनुनेष्यामि ॥

---

ततः प्रविशत्युद्यानपालिका ॥

---

ततइति ॥ ततः - अनन्तरम् । उद्यानपालिका - आरामरक्षी मधुकरिका । प्रविशति - रङ्गस्थलंप्राप्नोति ॥

---

समा ॥ ( उपसृत्य ) आळि! अवि सुहो दे उज्जाणवणव्वावारो । छा ॥ ... आळि! अपि सुख स्ते उद्यानवनव्यापारः ॥

---

समाहितिकेति ॥ समाहितिका । उपसृत्य - समीपमेत्य । ब्रवीति । आळि-सखिमधुकरिके । ते-तव । उद्यानवनव्यापारः-उपवनरक्षणवृत्तिः । सुखोऽपि - शर्मदःकिम् ॥

---

मधुकरिका ॥ अम्मो समाहिदिआ! सहि! साअदं दे । छा ॥ अहह समाहितिका ! सखि ! स्वागतं ते ॥

---

मधुकरिकेति ॥ मधुकरिका । वक्ति । अहहसमाहितिका-आश्चर्यंसमाहितिकात्वसमागता । हे सखि । ते - तुभ्यं । स्वागतं - शोभनमागमनंकच्चित् ॥

---

समा॥ हला भअवदी आणवेदि। अरित्तपाणिणा अम्हारिसजणेण अत्तभोदी देवी देक्खिदव्वा। ता बीजपूरएण सुस्सूसइदुं इच्छामित्ति। छा॥ सखि! भगवती आज्ञापयति। अरिक्तपाणि नास्मादृशजने नात्रभवती देवी द्रष्टव्या। त द्बीजपूरकेण शुश्रूषयितु मिच्छामीति॥

---

समाहितिकेति॥ समाहितिका। वदति। हे सखि - मधुकरिके। भगवती - पूजयापण्डितकौशिकी। आज्ञापयति - नियोजयति। स्वामितिशेषः। किमिति। अरिक्तपाणिना - अशून्यहस्तेन। अस्मादृशजनेन - अस्मत्सदृशजनेन। अत्रभवती - पूजया। देवी - पट्टमहिषीधारिणी। द्रष्टव्या - दर्शनीया। तत् - तस्मात्कारणात्। बीजपूरकेण - एतन्नाम्नाफलेन। शुश्रूषयितुं - स्वयासेवांकारयितुं। इच्छामि - वाञ्छामीति। पूर्वेणान्वयः॥

---

मधु॥ णं सण्णिहिदंज्जेव बीजपूरअं। कहेहि अण्णोण्णसंघरिसिदाणं णट्टाआरिआणं उवदेसं देक्खिअ कदरो भअवदीए पसंसिदो।छा॥ ननु सन्निहितमेव बीजपूरकं। कथय अन्योन्यं संघर्षितयो र्नाट्याचार्ययो रुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः॥

---

मधुकरिकेति॥ मधुकरिका। वक्ति। ननु - समाहितिके॥ नि॥ प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे नन्वित्यमरः॥ बीजपूरकम् - फलपूरफलम्। सन्निहितं - समीपस्थमेव। अन्योन्यं - परस्परम्। संघर्षितयोः - अमर्षितयोः। नाट्याचार्ययोः - हरदत्तगणदासयोः। उपदेशं - विद्योपदेशम्। दृष्ट्वा - वीक्ष्य। भगवत्या - पूजयापरिव्राजिकया। कतरः - द्वयोर्मध्ये कः। प्रशंसितः - परिगणितः। श्रेष्ठत्वेनेतिशेषः। कथय - ब्रूहि॥

---

समा ॥ दुवेविकिळ आगमिणो पओअणिपुणाअ । किंदु सिस्सागुणविसेसेण उण्णमिदो गणदासो ।छा॥ द्वावपि किल आगमिनौ प्रयोगनिपुणौच । किंतु शिष्यागुणविशेषेण उन्नमितो गणदासः ॥

---

समाहितिकेति ॥ समाहितिका । वक्ति । मधुकरिके । द्वावपि - उभौच । आगमिनौ - शास्त्रवेदिनौ । प्रयोगनिपुणौ - उपदेशकुशलौ चकिल । किंतु - परंतु । शिष्यागुणविशेषेण - छात्रागुणातिशयेन । गणदासः - एतदाख्ययोनाट्याचार्यः । उन्नमितः - औन्नत्यंप्रापितः ॥ प्रयोगातिशय प्रतिपादकपाठान्तरंतु प्रश्नानुगुणतयास्थितत्वादुपेक्षितम् ॥

---

मधु ॥ अह माळविआगअं कोलीणं किति सुणीअदि ।छा ॥ अथ माळविकागतं कौलीनं किमिति श्रूयते ॥

---

मधुकरिकेति ॥ मधुकरिका । वदति । समाहितिके । माळविकागतम् - माळविकाविषयकं । कौलीनं - लोकप्रवादः ॥ नि ॥ स्यात्कौलीनं लोकवादे युद्धेपश्वहिपक्षिणा मित्यमरः ॥ किमिति - कथं । श्रूयते - आकर्ण्यते । अथेतिप्रश्ने । एतत्पृच्छामीत्यर्थः ॥

---

समा ॥ बाढंकिल तस्सिं साहिळासो भट्टा । केवळं देवीए धारिणीए चित्तं रक्खंतो अत्तणो पहुत्तणं णदंसेदि । माळविआवि इमेसु दिअसेसु अणुहूदमुत्ताविअ माळईमाळा मिळाअमाणा लक्खीअदि । अदो अवरं णज्जाणे । विसज्जेहि मं ।छा ॥ बाढंकिल तस्यां साभिलाषो भर्ता । केवलं देव्या धारिण्याश्चित्तं रक्षन्नात्मनः प्रभुत्वं नदर्शयति । मा

ळविका एषेषु दिवसेष्वनुभूतमूर्छेव मालतीमाला म्लायमाना लक्ष्यते। अतोऽपरं नजाने। विसृज मां ॥

---

समाहितिकेति ॥ समाहितिका। कथयति। मधुकरिके। भर्ता - राजा। तस्यां - माळविकायां। बाढं - बलीयः। साभिलाषः - अभिलाषसहितःकिल। अपितु। धारिण्याः - एतदाख्यायाः। देव्याः - पट्टमहिष्याः। चित्तम् - मनः। रक्षन् - अनुपालयन्। आत्मनः - स्वस्य। केवलम् - समग्रम्। प्रभुत्वम् - स्वातन्त्र्यं। नदर्शयति - नप्रकटयति। माळविका - एतदाख्याबालिकापि। एषुदिवसेषु - वर्तमानेषुदिनेषु। अनुभूतमूर्छा - मूर्छावस्था मनुभवन्ती। मालतीमाला - मालतीपुष्पस्रगिव। म्लायमाना - ग्लायमानासती। लक्ष्यते - दृश्यते। अतः - अस्मात्। अपरम् - अन्यत्। नजाने - नवेद्मि। तस्मात्। मां। विसृज - त्यज ॥

---

मधु ॥ एदं साहावळंबि बीजपूरअं गेण्ह। छा ॥ एतच्छाखावलम्बि बीजपूरकं गृहाण ॥

---

मधुकरिकेति ॥ मधुकरिका। वक्ति। समाहितिके। शाखावलम्बि - लतासक्तम्। एतत् - पुरोवर्ति। बीजपूरकम् - एतन्नामकम्फलं। गृहाण - स्वीकुरु ॥

---

समा ॥ तह। इति नाट्येन बीजपूरकं गृहीत्वा हला तुमंवि इदो पेसलतरं साहुजणसुस्सूसाए फळं पावेहि इति प्रस्थिता। छा ॥ तथा ··· हला त्वम पीतः पेशलतरं साधुजन शुश्रूषायाः फलं प्राप्नुहि ··· ॥

---

समाहितिकेति ॥ समाहितिका। तथा - तेनप्रकारेण। करोमीतिशेषः। इति - इत्युक्त्वा। नाट्येन - अभिनयेन। बीजपूरकम् - एतन्ना

मकम्फलम् । गृहीत्वा - संगृह्य । वदति । हला - सखि मधुकरिके । त्व मपि । इतः - अस्मात्फलात् । पेशलतरम् - मृदुतरम् । साधुजनशुश्रूषायाः - सज्जनसेवायाः । फलम् । प्राप्नुहि - लभस्व । इति-एवमुक्त्वा। प्रस्थि ता - निर्गता ॥

---

मधु ॥ सहि समंज्जेव गच्छम्ह । अहंवि इमस्स चिरा अमाणकुसुमोग्गमस्स तवणीआसोअस्स दोहणणिमित्तं देवी ए णिवेदेमि । छा ॥ सखि ! सममेव गच्छावः । अह मप्यस्य चिरायमाण कुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं दे व्यै निवेदयामि ॥

---

मधुकरिकेति ॥ मधुकरिका । प्राह । हे सखि - समाहितिके। आवां । समं - सहैव । गच्छावः - यावः । कुतः । चिरायमाणकुसुमो द्गमस्य - पुष्पोत्पत्तिचिरयतः । अस्य - एतस्य । तपनीयाशोकस्य - स्व र्णाशोकवृक्षस्य । दोहदनिमित्तम् - पुष्पाद्युत्पाद कौषधविशेषहेतुम् । अह मपि । देव्यै - पट्टमहिष्यै । निवेदयामि - विज्ञापयामि ॥

---

समा ॥ जुज्जेदि, अहिआरोक्खु तुह । छा ॥ युज्यते। अधिकारःखलु तव ॥

---

समाहितिकेति ॥ समाहितिका । वक्ति। सखि ! युज्यते - यु क्तमेवेदं । कुतः । तव । अधिकारःखलु - नियोगोहि ॥

---

इति निष्क्रान्ते ॥

---

इतीति ॥ इत्युक्त्वा । निष्क्रान्ते - निर्गते । उभेचेतिशेषः ॥

---

इ ति प्र वे श क:.

प्रवेशकलक्षणन्तु ॥

श्लो ॥ प्रवेशकोऽनुदात्तोक्त्या नीचपात्र प्रयोजित: ।
अंक द्वयांत र्विज्ञेय श्शेषं विष्कम्भके यथा ॥

इ ति द र्प णो क्त म नु स न्धे य म्.

तत:प्रविशति कामयमानावस्थो राजा । विदूषकश्च ॥

ततइति ॥ तत: - अनन्तरम् । कामयमानावस्थ: - कामयमानानां - कामिनां । अवस्था - दशेवअवस्थायस्यस: । राजा - नृपोऽग्निमित्र: । विदूषक: - एतन्नामकोनटश्च गौतमइतियावत् । प्रविशति - रङ्गस्थलम्प्राप्नोतीति प्रत्येकान्वय: ॥

राजा ॥ आत्मानं विलोक्य ॥

श्लो ॥ शरीरं क्षामंस्या दसति दयितालिङ्गन सुखे
भवे त्सास्रं चक्षु: क्षणमपि नसा दृश्यतइति ।
तया सारङ्गाक्ष्या त्व मसि नकदाचि द्विरहितं
प्रसक्ते निर्वाणे हृदय ! परितापं व्रजसिकिम् ॥३६॥

राजेति ॥ राजा - क्षितिप: । आत्मानम् - स्वं । विलोक्य - दृष्ट्वा प्राह । शरीरमिति ॥ दयितालिङ्गनसुखे - प्रियापरिष्वङ्गजनितानन्दे । असति - अविद्यमानेसति । शरीरं - वपु: । क्षामं - कृशं । स्यात् - भवेत् । सम्भावनायांलिङ् । अनेनस्मरजा कृशतावस्थासूचिता । क्षणमपि - अल्पकालमपि । सा मालविका । नदृश्यते - नावलोक्यतइति हेतो: । च

क्षुः - नयनम् । जातविकृतवचनम् । चक्षुर्वीइत्यर्थः । सास्रं - बाष्पसहितं । भवेत् - स्यात् । तदपिसम्भावितमेवेत्यर्थः । हे हृदय - चित्त । तया - अनुभूतया । सारङ्गाक्षया - हरिणनेत्रया माळविकया । कदाचित् - कदापि । त्वं । विरहितं - वियुक्तं । नासि - नभवसि । तस्मात् । निर्वाणे - सुखे । प्रसक्ते - सम्प्राप्तेसति । किं - किमर्थम् । परितापम् - सन्तापम् । व्रजसि - प्राप्नोषि ॥

---

विदू ॥ अळं भवदो धीरदं उज्झिय परिदेविदेण । दिठ्ठा मए तत्तहोदीए मालविआए पिअसही वउळावळिआ । सुणाविदाअअत्थं जो भवदा संदिठ्ठो । छा ॥ अलं भवतो धीरता मुज्झित्वा परिदेवितेन । दृष्टा मया तत्रभवत्या माळविकायाः प्रियसखी वकुळावळिका । श्राविता चार्थं यो भवता सन्दिष्टः ॥

---

विदूषकइति ॥ विदूषकः । ब्रूते । धीरताम् - धैर्यम् । उज्झित्वा - त्यक्त्वा । भवतः - तव । परिदेवितेन - विलापेन । अलम् - कृतम् । मास्त्वित्यर्थः । कुतः । तत्रभवत्याः - पूज्यायाः । माळविकायाः । प्रियसखी - इष्टसहचरी । वकुळावळिका - एतदाख्यावनिता । मया । दृष्टा - वीक्षिता । भवता - त्वया । यः - अर्थः । सन्दिष्टः - वाचिकत्वेनोक्तः । तमर्थं - प्रयोजनं । श्राविता - श्रुतिंप्रापिताच ॥

---

राजा ॥ ततः किं मुक्तवती ॥

---

राजेति ॥ राजा । प्राह । ततः - त्वद्वाक्यश्रवणानन्तरं । किं मुक्तवती - किम्भणितवती । वकुळावळिके त्यध्याहारः ॥

---

विदू ॥ विण्णवेहि भट्टारअम् । अणुगिहीदम्हि इमिणा णिओएण । किंतु सा तवस्सिणी देवीए अहिअअरं रक्खीअमाणा रक्खिदाणंविअ णिहीणं सुहं समासादइदव्वा ? । तहवि घटइस्संत्ति । छा ॥ विज्ञापय भट्टारकम् । अनुगृहीतास्म्यनेन नियोगेन । किन्तु सा तपस्विनी देव्या अधिकतरं रक्ष्यमाणा रक्षितानामिव निधीनां सुखं समासादयितव्या ? । तथापि घटयिष्यामीति ॥

---

विदूषकइति ॥ विदूषकः । कथयति । किमिति । राजन् । अनेन - एतेन । नियोगेन - आज्ञया । अनुगृहीता - अनुग्रहम्प्रापिता । अस्मि - भवामि । किन्तु - परंतु । देव्या - पट्टमहिष्या । रक्षितानां - संरक्षितानां । निधीनां - भूमौस्थापितानां धनानामिव । प्रथमार्थेसम्बन्धसामान्येषष्ठी । अधिकतरम् - अत्यधिकंयथातथा । रक्ष्यमाणा -पोष्यमाणा। तपस्विनी - करुणापात्रभूता । नि ॥ तपस्वी करुणापात्र मितिहलायुधः। सा - मालविका । सुखं - सुलभंयथातथा । समासादयितव्या - प्रापणीयाकिमितिकाकुः । तथापि - तदपि । घटयिष्यामि - संघटनंकरिष्यामि । इति - एवंप्रकारेण । भट्टारकम् - राजानंप्रति । विज्ञापय - निवेदय । इत्युक्तवतीति पूर्ववाक्येनानुषङ्गः ॥ अत्रप्राप्तिसम्भावनया प्राप्तयाशानामतृतीयावस्थासूचिता । अनया प्राप्तयाशयाबिन्दो रसमन्वया द्गर्भसन्धिरिति मन्तव्यम् ॥

---

राजा ॥ भगवन् ! संकल्पयोने ! प्रतिबन्धवत्स्वपि विषये ष्वभिनिवेश्य तथा प्रहरिष्यसि, यथा जनोऽयं नकालान्तरक्षमो भवति । सविस्मयम् ॥

श्लो ॥ क्व रुजा हृदयप्रमाथिनी क्वच ते विश्वसनीय मायुधं।
मृदु तीक्ष्णतरं य दुच्यते तदिदं मन्मथ ! दृश्यते त्वयि ॥

---

राजेति ॥ राजा । प्राह । किमिति । भगवन् - हे पूज्यतम । संकल्पयोने - चेतोभव । प्रतिबन्धवत्सु - सप्रतिबन्धकेष्वपि । विषयेषु - कार्येषु । अभिनिवेशय - अभिनिवेशमुत्पाद्य । तथा - तेनप्रकारेण । त्वं । प्रहरिष्यसि - व्यधयिष्यसि । यथा - येन प्रकारेण । अयम् - एषः । जनः - मादृशोलोकः । कालान्तरक्षमः -कालविलम्बसहः । नभवति - नसम्पत्स्यते । सविस्मयम् - साश्चर्यम् यथातथा पुनर्वक्ति । क्वेति ॥ हृदयप्रमाथिनी - मनःपीडाकरी । रुजा - बाधा । क्व - कुत्र । ते - तव । विश्वसनीयम् - अबाधकत्वेन विश्वासार्हम् । आयुधम् - पुष्पमयं शस्त्रम् । क्व - कुत्रच । उभयं न संघटतइतिभावः । हे मन्मथ ! -मदन !। मृदु - कोमलंसदेव । तीक्ष्णतरम् - अतीवकठोरं । यदुच्यते - कथ्यते । तदिदं - तदेतत् । त्वयि । दृश्यते - वीक्ष्यते ॥ तवशस्त्रस्य कुसुममयत्वेन मृदुत्वात् तापकत्वाच्च तथाविधत्वमितिभावः ॥

---

विदू ॥ णं भणामि तस्सिं साहणिज्जे कज्जे किदो मए उवाओवक्खेवोत्ति । ता पज्जवत्थावेदु भवं अत्ताणं ।छा॥ ननु भणामि । तस्मिन् साधनीये कार्ये कृतो मयोपायोपक्षेपइति । तत्पर्यवस्थापयत्वत्रभवानात्मानम् ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । ननु राजन् । भणामि - कथयामि । साधनीये - यत्नसाध्ये । तस्मिन् - प्रक्रान्ते । कार्ये - मालविकासंघटनरूपेप्रयोजने । मया । उपायोपक्षेपः - उपायारम्भः । कृतः - रचितइति । तत् - तस्मात्कारणात् । अत्रभवान् - पूज्यःभवान् । आत्मानम् - स्वाम् । पर्यवस्थापयतु - स्वास्थ्यम्प्रापयतु ॥ अत्र कृतउपायोपक्षेपइत्यनेन कपटोपायकल्पनाया गम्यमानत्वेन अभूताहरणंनाम सन्ध्यङ्गमुक्तंभवति ॥

---

राजा॥ अथेमं दिवसशेषमुचितव्यापारविमुखेन चेतसा क्वनु यापयामि॥

---

राजेति॥ राजा। प्राह। अथ - तर्हि। इमं - वर्तमानं। दिवसशेषम् - अवशिष्टदिनभागम्। उचितव्यापारविमुखेन - तत्तत्कालार्हकृत्यपराङ्मुखेन। चेतसा-चित्तेन। क्वनु - कुत्रप्रदेशे। यापयामि - अतिवाहयामि। वदेतिशेषः॥

---

विदू॥ अज्जएव्व फढमावदारसुहआणि रत्तकुरवआणि उवाअणं पेसिअ णववसन्तावदारव्ववदेसेण इरावदीए णिउणिआमुहेण आचक्खिदो। इच्छेमि अज्जउत्तेण सह दोलाधिरोहणं अणुभविदुंति। भवदावि सम्पडिण्णादं। ता पमदवणंएव्व गच्छम्ह। छा॥ अद्यैव प्रथमावतारसुभगानि रक्तकुरवकाण्युपायनं प्रेष्य नववसन्तावतारव्यपदेशे नेरावत्या निपुणिकामुखे नाख्यातः। इच्छाम्यार्यपुत्रेणसह डोलाधिरोहण मनुभवितुमिति। भवतापि सम्प्रतिज्ञातं तत्प्रमदवनमेव गच्छाव॥

---

विदूषकइति॥ विदूषकः। कथयति। किमिति। इरावत्या - एतन्नामिकयाद्वितीयदेव्या। नववसन्तावतारव्यपदेशेन - नूतनवसन्तर्तुप्रादुर्भावव्याजेन। प्रथमावतारसुभगानि - आद्योत्पत्तिसुन्दराणि। रक्तकुरवकाणि - रक्तकुरवकपुष्पाणि। निपुणिकामुखेन - एतदाख्यचेटीद्वारा। अद्य - अस्मिन्नेवदिने। उपायनम् - उपधां। प्रेष्य - प्रापय्य। आख्यातः - अभिहितः। किमिति। आर्यपुत्रेण - महाराजेनभवतासह। डो

लाधिरोहणं -डोलारोहणोत्सवम् । अनुभवितुम् - उपभोक्तुम् । इच्छामि- वाञ्छामीति । भवता - त्वयापि । सम्प्रतिज्ञातम् - अङ्गीकृतं । तत् - तस्मात्कारणात् । प्रमदवनम् - उद्यानमेव । गच्छाव - व्रजाव ॥

---

राजा ॥ नक्षम मिदम् ॥

---

राजेति ॥ राजा । प्राह । इदम् - भवदुक्तं । नक्षमं - नार्हं ॥

---

विदू ॥ कहंविअ । छा ॥ कथमिव ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । कथं - केनहेतुना । नक्षम मित्यनुषङ्गः । इवेतिवाक्यालंकारे ॥

---

राजा ॥ वयस्य निसर्गनिपुणा स्त्रियः । कथं मा म न्यसंक्रान्तहृदय मुपलालयन्तमपि ते सखी नलक्षयिष्यति । अतः पश्यामि ॥

श्लो ॥ उचितः प्रणयो वरं विहन्तुं
बहवः खण्डनहेतवोहि दृष्टाः ।
उपचारविधि र्मनस्विनीनां
ननु पूर्वाभ्यधिकोऽपि भावशून्यः ॥३८॥

---

राजेति ॥ राजा । प्राह । किमिति । हे वयस्य - सखे । स्त्रियः - योषितः । निसर्गनिपुणाः - निसर्गेण - स्वभावेन । निपुणाः - परेंगित ज्ञानप्रवीणाः । अन्यसंक्रान्तहृदयम् - इतरासक्तचित्तं । मां । उपलालयन्तम् - आनुकूल्यमाचरन्तमपि । ते - तव । सखी - इरावती । नलक्षयिष्यति - नावगमिष्यतिकिमितिकाकुः । अतः-अस्माद्धेतोः । पश्यामि - तर्कयाम्येवम् । उचितइति ॥ प्रणयः - स्नेहः । विहन्तुम् - प्रहर्तुम् । ब

रम् - ईषत्प्रियंयथातथा। उचितः - युक्तः। हि - यस्मात्कारणात्। ख
ण्डनहेतवः - खण्डनस्य - अभिमताननुष्ठानरूपस्य। हेतवः - कारणानि
बहवः - अमिताः। दृष्टाः - वीक्षिताः। कल्पयितुंशक्या इत्यर्थः। भा
शून्यः - प्रेमरहितः। उपचारविधिः - इष्टाचरणम्। पूर्वाभ्यधिकः - पूर्वस्म
दतिशयितोऽपि। मनस्विनीनां - मानवतीनांतु। न - उपचारविधिः
भवति॥

---

विदू॥ णारिहदि भवं अंतेउरट्ठिदं दक्खिण्णं एक्कपदे पिट्ठदो कादुं। छा॥ नार्हति भवा नन्तःपुरस्थितं दाक्षिण्यमेकपदे पृष्ठतः कर्तुम्॥

---

विदूषकइति॥ विदूषकः। वक्ति। भवान्। अन्तःपुरस्थितम् - अवरोधवधूजनविषयं। दाक्षिण्यम् - आनुकूल्यम्। एकपदे - एकदा। पृष्ठतः कर्तुं - निराकर्तुं। नार्हति - योग्योनभवति॥

---

राजा॥ विचिन्त्य तेनहि प्रमदवनमार्ग मादेशय॥

---

राजेति॥ राजा। विचिन्त्य - आलोच्य। प्राह। विदूषक। तेनहि - तेनहेतुना। प्रमदवनमार्गम् - उद्यानवनपथम्। आदेशय - दर्शय॥

---

विदू॥ इदो इदो भवं। छा॥ इत इतो भवान्॥

---

विदूषकइति॥ विदूषकः। वक्ति। राजन्। भवान्। इतइतः - अनेनानेनमार्गेण। आगच्छत्वितिशेषः॥

---

उभौ परिक्रामतः॥

---

उभाविति ॥ अनन्तरम् । उभौ - द्वौराजविदूषकौ । परिक्रामतः - उद्यानवनंप्रतिगच्छतः ॥

---

विदू ॥ णं एदं पमदवणं पवणबळचळाहिं पळ्ळवंगुळीहिं तुअरावेदिविअ भवंतं पविसुदुं । छा ॥ नन्वेत त्प्रमदवनं पवनबलचलाभिः पल्लवांगुळीभि स्त्वरयतीव भवन्तं प्रवेष्टुम् ॥

---

विदूषकइति ॥ विदूषकः । ब्रवीति । ननु - राजन् । एतत्प्रमदवनम्-इदमुद्यानवनम् । पवनबलचलाभिः - वायुवशाकम्पनाभिः । पल्लवांगुळीभिः - किसलयकर शाखाभिः । भवन्तम् - त्वाम् । प्रवेष्टुं - निवेशयितुं । स्वस्मिन्निति शेषः । त्वरयति - सत्वरमाकारयतीव वीक्षयत इत्यधयाहारः ॥

---

राजा ॥ स्पर्शंरूपयित्वा अभिजातः खलु वसन्तः । सखे ! पश्य ॥

श्लो ॥ आमत्तानां श्रवणसुभगैः कूजितैः कोकिलानां
सानुक्रोशं मनसिजरुज स्सह्यतां पृच्छतेव ।
अंगेचूतप्रसवसुरभि र्दक्षिणो मारुतो मे
सान्द्रस्पर्शः करतलइव व्यापृतो माधवेन ॥३९॥

---

राजेति ॥ राजा । स्पर्शं - वायुस्पर्शकृतसुखम् । रूपयित्वा- अभिनीय । प्राह । वसन्तः - माधवः । अभिजातः - उत्तमःखलु । सखे- हेवयस्य । पश्य - आलोकय । आमत्तानामिति ॥ श्रवणसुभगैः - श्रुतिसुखकरैः । आमत्तानाम् - सम्यक्प्रमत्तानां । कोकिलानाम् - परभृतानाम् । कूजितैः - स्वनैः । मनसिजरुजः - मन्मथवेदनायाः । सह्यतां - सोढुं

योग्यतां । सानुक्रोशं - सदयंयथातथा। पृच्छता-प्रश्नंकुर्वतेव। मामिति शेषः। माधवेन - वसंतेन। चूतप्रसवसुरभिः - रसालकुसुमसुगन्धिः। दक्षिणः - याम्यदिग्भवः। मारुतः - मलयपवनः। मे - मम। अङ्गे - शरीरे। सान्द्रस्पर्शः - स्निग्धाभिमर्शः। करतलः - हस्तप्रदेशइव। व्यापृतः - प्रसारितः॥

---

विदू॥ पविस णिव्वुदिळाहाअ। छा॥ प्रविश निर्वृतिलाभाय॥

---

विदूषकइति॥ विदूषकः। ब्रूते। राजन्। निर्वृतिलाभाय-सुखप्राप्तये। प्रविश - उद्यानम्प्राप्नुहि॥

---

उभौ प्रविशतः॥

---

उभाविति॥ उभौ - द्वौराजविदूषकौ। प्रविशतः - उद्यानं निविशतः॥

---

विदू॥ अवधाणेण दिट्ठिं देहि। एदंखु भवंतंविअ लोहइदुकामाए पमदवणलच्छीए जुवदीवेसलज्जावअतिअं कुसुमणेवत्थं गहिदं। छा॥ अवधानेन दृष्टिं देहि। एतत्खलुभवन्तमिव लोभयितुकामया प्रमदवनलक्ष्म्या युवतिवेषलज्जापयितृकं कुसुमनेपथ्यं गृहीतम्॥

---

विदूषकइति॥ विदूषकः। कथयति। राजन्। अवधानेन - अप्रमादेन। दृष्टिंदेहि - विलोकय। एतत्खलु - इदम्प्रमदवनन्तु। भवंतं - त्वां। लोभयितुकामया - व्यामोहंजनयितुमनसेव। सू॥ तुंकाममनसोरपीतिमकारलोपः। प्रमदवनलक्ष्म्या - उपवनश्रिया। युवतिवेषलज्जाप

यितृकं - स्त्री नेपथ्यव्रीडाजनकं । कुसुमनेपथ्यं - पुष्पमयालङ्करणम् । गृहीतम् - धृतम् ॥

---

राजा ॥ ननु विस्मया दवलोकयामि ॥

श्लो ॥ रक्ताशोकलता विशेषितगुणो बिम्बाधरालक्तकः
प्रत्याख्यात विशेषकं कुरवकं श्यामावदातारुणम् ।
आक्रान्ता तिलकक्रियापि तिलकै र्लग्नद्विरेफांजनै
स्सावज्ञेव मुखप्रसाधनविधौ श्री र्माधवी योषितां॥४०

---

राजेति ॥ राजा । प्राह । ननु -सखे । विस्मयात् - आश्चर्यात् । अवलोकयामि - पश्यामि । उद्यानमितिशेषः । रक्ताशोकेति ॥ बिम्बाधरालक्तकः - बिम्बमिवअधरः - अधरोष्टः । तस्मिन् अलक्तकः - लाक्षारसः । रक्ताशोकलताविशेषितगुणः - रक्तया - लोहितया । अशोकलतया - पुष्पिताशोकशाखया । विशेषितः - अतिशयितः । गुणोयस्य स तथोक्तः । श्यामावदातारुणम् - नीलसितरक्तं । कुरवकम् - एतदाख्यं पुष्पम् । प्रत्याख्यातविशेषकं-तिरस्कृतपत्रावळीरचनम् । अभूदितिशेषः । लग्नद्विरेफाञ्जनैः - लग्नाः - सक्ताः । द्विरेफाः - भ्रमराः । अञ्जनानीवयेषुतैः । तिलकैः - तदाख्यकुसुमैः । तिलकक्रिया - चित्रकालंक्रिया । आक्रान्ता - पराभूता । एवं । माधवी - वसन्तसंबन्धिनी । श्रीः - शोभा । योषितां - स्त्रीणां । सुखप्रसाधनविधौ - सुखेन - अनायासेन । प्रसाधनविधौ- अलंकारसम्पादने । सावज्ञा - सतिरस्कारेव । तिरस्कृतवतीवस्थितेत्युत्प्रेक्षा ॥

---

इ त्युद्यानशोभां निरूपयतः ॥

---

इतीति ॥ इति - अनेनप्रकारेण । उद्यानशोभां -उपवनलक्ष्मीं । निरूपयतः - वर्णयतः । राजविदूषकावितिशेषः ॥

---

ततः प्रविशति पर्युत्सुका माळविका ॥

---

ततइति ॥ ततः - अनन्तरम् । पर्युत्सुका - उत्कण्ठिता । माळविका - एतन्नामिकाबालिका । प्रविशति - उद्यानंप्राप्नोति ॥

---

माळविका ॥ अविण्णादहिअअं भट्टारअं अहिळसंती अत्तणोविदाव ळज्जेमि । कुदो विहवो सिणिद्धस्स सहीअणस्स इमं वुत्तंतं आचक्खिदुं । णआणे अप्पडिआरगुरुअं वेदणं कित्तिअं काळं मदणो मं णइस्सदित्ति । कतिचित्पदानि गत्वा कहिंणु पत्थिदम्हि । विचिन्त्य आ संदिट्टं देवीए । माळविए ! गोदमचावळादो दोलापरिब्भट्टाए सरुजो मह्चळणो । णसक्कणोमि । तुमंदाव तवणीआसोअस्स दोहळं णिवट्ठेहि । जइ सो पंचरत्तब्भंतरे कुसुमं दंसेदि तदो तुह । अहिळासपूरइत्तिअं पसादं दावइस्संति । ता जाव णिओअभूमिं पढमं गदा होमि । दाव अणुपदं ममचळणाळंकारहत्थाए वउळावलिआए आअंतव्वं ; ता दाव परिदेविस्सं विस्सद्धं मुहुत्तअं । इतिपरिक्रामति । छा ॥ अविज्ञात त्हृदयं भट्टारक मभिलषन्त्यात्मनोऽपितावल्लज्जामि।कुतोविभवस्स्निग्धस्यसखीजनस्य इमं वृत्तान्त माख्यातुम् । नजा नेऽप्रतीकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यतीति ··· कुत्र प्रस्थितास्मि ··· आ स्संदिष्टास्मि देव्या । गौतमचापला डोलापरिभ्रष्टाया स्सरुजो मम चरणौ । नशक्नोमि । त्वंताव त्तपनीयाशोकस्य दोहदं निर्वर्तय, यदि सपञ्चरात्राभ्यंतरे कुसुमं दर्शयति तत स्तुभ्य मभिलाषपूरयितृकं प्रसादं दापयिष्यामीति । याव न्नियोगभूमिं

प्रथमं गता भवामि । ताव दनुपदं मम चरणालंकारहस्तया वकुलावळिकया आगन्तव्यं । त त्परिदेविष्येताव द्विस्रब्धं मुहूर्तकम् ... ॥

---

माळविकेत्यादि ॥ माळविका । वदति । कथम् । अविज्ञात हृदयम् - अविदितस्वान्तम् । भट्टारकम् - राजानम् । अभिलषन्ती -इच्छन्ती । अहं । आत्मनः - स्वस्मादपि । तावत् -इदानीम् । लज्जामि -व्रीडामि । तस्मात् । स्निग्धस्य -प्रेमयुक्तस्य । सखीजनस्य - सहचरीजनस्य । इमम् - एतम् । वृत्तान्तम् - वार्ताम् । आख्यातुम् - कथयितुम् । कुतः - केनप्रकारेण । विभवः - सामर्थ्यं । ममास्तीतिशेषः । मदनः - मन्मथः । अप्रतीकारगुरुकाम् - अप्रतीकारा - प्रतिक्रियाशून्या । अतएव । गुरुका- दुर्भरा । ताम् । वेदनां - पीडां । मां । कियन्तं - कियत्परिमाणकं । कालम् - समयम् । नेष्यति - गमयिष्यतीति । नजाने - नवेद्मि । अथ । कतिचित् -कानिचित् । पदानि - पादविन्यासान् । गत्वा - यात्वा । पुनः प्राह । कुत्र - क्वत्रा । प्रस्थिता - प्रयाता । अस्मि - भवामि । विचिंत्य - विचार्य । ब्रवीति । आ - स्मरामि ॥ नि ॥ आप्रगृह्यस्मृतौवाक्य इत्यमरः ॥ गौतमचापलात् - एतन्नामकविदूषकाविनयात् । डोलापरिभ्रष्टायाः - डोलिकापतितायाः । मम । चरणौ - पादौ । सरुजौ -सवेदनौ । अतः । नशक्नोमि - नसमर्थास्मि । गन्तुमितिशेषः । त्वं । तावत् - सम्प्रति । तपनीयाशोकस्य - एतन्नाम्नोवृक्षाविशेषस्य । दोहदं - पुष्पोत्पादकक्रियाविशेषं । निर्वर्तय - निष्पादय । इति । देव्या - पट्टमहिष्या । संदिष्टा -आज्ञतास्मि । किञ्च । सः - तपनीयाशोकः । पञ्चरात्राभ्यन्तरे - पञ्चसुरात्रिषुमध्ये । कुसुमं-पुष्पं । जातावेकवचनं । दर्शयतियदि - उद्गमयति चेत् । ततः - तर्हि । अभिलाषपूरयितृकम् - मनोरथपूर्तिकरं । प्रसादं - पारितोषिकं । तुभ्यं । दापयिष्यामि - प्रतिपादयिष्यामीति । संदिष्टास्मीतिपूर्वेणैवान्वयः । यावत् - यावताकालेन । प्रथमं - पूर्वं । नियोग भूमिं - देवीनियुक्तोद्यानवनभुवम् । गता - प्राप्ता । भवामि । तावत् - तावता

कालेन । मम । चरणालङ्कारहस्तया - करस्थितपादालङ्कारया । वकुलावळिकया - एतन्नाम्न्यासख्या । अनुपदम् - पृष्टतः । आगन्तव्यम्-आयातव्यम् । तत् - तस्मात् । तावत् - तदागमनपर्यन्तं । विस्रब्धं-यथेच्छं। मुहूर्तकम् - अल्पकालं । परिदेविष्ये-विलपिष्यामि । इति - एवमुक्त्वा । परिक्रामति - निर्गच्छति ॥

---

विदू ॥ दृष्ट्वा॥ **हीही एदंखु सीहुपाणुव्वेजिअस्स मच्छंडिआ उवणदा । छा ॥ आश्चर्यम् एतत्खलु शीधुपानोद्वेजितस्य मत्स्यण्डि कोपनता ॥**

---

विदूषकइति ॥ विदूषकः । दृष्ट्वा - विलोक्य । प्राह । शीधुपानोद्वेजितस्य- आसवपानाकुलितस्य । मत्स्यण्डिका- शर्कराविशेषः । नि ॥ मत्स्यण्डीफाणितंखण्डविकारेशर्करासितेत्यमरः ॥ उपनता - संप्राप्ता । एतत् - इदम् । आश्चर्यंखलु - अद्भुतंहि ॥

---

**राजा ॥ अये किमेतत् ॥**

---

राजेति ॥ राजा । पृच्छति । अये - गौतम । एतत् - त्वदुक्तंवाक्यं । किं - कीदृशार्थकम् । कथयेतिशेषः ॥

---

**विदू॥ एसा णादिपरिक्किदवेसा उस्सुअवअणा एआइणी माळविआ अदूरे वट्टदि । छा ॥ एषानातिपरिष्कृतवेषोत्सुकवदना एकाकिनी माळविका अदूरे वर्तते ॥**

---

विदूषकइति ॥ विदूषकः । कथयति । नातिपरिष्कृतवेषा - ईषदलंकृतनेपथ्या । उत्सुकवदना - उत्कण्ठितमुखी । एकाकिनी - असहाया । एषा - इयं । माळविका - एतन्नाम्नीबालिका । अदूरे - निकटे । वर्तते -

तिष्ठति ॥

---

राजा ॥ सहर्षम् ॥ कथंमाळविका ॥

---

राजेति ॥ राजा । सहर्षं - ससंतोषंयथातथा । प्राह । कथंमाळवि का - माळविकैवकिं । कथमितिप्रश्ने ॥

---

विदूषकः ॥ अहइं । छा ॥ अथकिम् ॥

---

विदूषकइति ॥ विदूषकः । ब्रवीति । अथकिं - तथैव ॥

---

राजा ॥ शक्य मिदानीं जीवित मवलम्बयितुम् ॥

श्लो ॥ त्व दुपलभ्य समीपगतां प्रियां
हृदय मुच्छ्वसितं मम विक्लबम् ।
तरु वृतां पथिकस्य जलार्थिन
स्सरित मारसितादिव सारसात् ॥४१॥

कतत्रभवती॥

---

राजेति ॥ राजा । प्राह । इदानीम् - अद्य । जीवितं - जीवन म् । अवलम्बयितुं - धारयितुं । शक्यं - सुलभं । मयेतिशेषः । कुतः । त्वदिति ॥ आरसितात् - श्रूयमाणात् । सारसात् - पक्षिविशेषात् । तरु वृतां - वृक्षाच्छादितां । सरितं - नदीमिव । त्वत् - भवतस्सकाशात् । स मीपगतां - निकटस्थितां । प्रियां - प्रेयसींमाळविकाम् । उपलभ्य - ज्ञा त्वा । जलार्थिनः - पिपासोः । पथिकस्य - पान्थस्येव । मम । विक्लबं - विह्वलं । हृद यं - मानसम् । उच्छ्वसितं - सजीवितं । भवतीत्यध्याहारः । विदूषक । तत्रभवती - माननीयामाळविका । क्व - कुत्र । स्थितेतिशेषः ॥ अत्रसं चिन्त्यमानार्थस्यप्राप्तिःक्रमोनामसन्ध्यङ्गमुक्तंभवति ॥

---

विदू ॥ एसा तरुराइमज्झादो णिक्कंता इदोज्जेव परिवट्टंती दीसदि । छा ॥ एषा तरुराजिमध्यान्निष्क्रान्ता इतएव परिवर्तमाना दृश्यते ॥

---

विदूषकइति ॥ विदूषकः । कथयति । एषा - इयंमाळविका । तरुराजिमध्यात् - वृक्षपंक्तिमध्यप्रदेशात् । निष्क्रान्ता- निर्गतासती । इतः- इमंप्रदेशमेव । परिवर्तमाना - आगच्छन्ती । दृश्यते - विलोक्यते ॥

---

राजा ॥ विलोक्य सहर्षं ॥ पश्याम्येनाम् ।

श्लो ॥ विपुलं नितम्बदेशे मध्येक्षामं समुन्नतं कुचयोः ।
अत्यायतं नयनयो र्मम जीवित मेत दायाति॥४२॥

सखे ! पूर्वस्मा दतिमनोहरमवस्थान्तर मुपारूढा तत्रभवती । तथाहि ।

श्लो॥ शरकाण्डपाण्डुगण्डस्थ लेय माभाति परिमिताभरणा।
माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता॥४३॥

---

राजेति ॥ राजा । विलोक्य - वीक्ष्य । सहर्षं - ससंतोषंयथातथा। प्राह । वयस्य । एनाम् - इमांमाळविकां । पश्यामि - विलोकयामि । विपुलमिति ॥ नितम्बदेशे - श्रोणीप्रदेशे । विपुलं - स्थूलं । मध्ये - अवलग्ने। नि ॥ मध्यमंचावलग्नंचमध्योऽस्त्रीत्यमरः ॥ क्षामं - कृशं । कुचयोः - पयोधरयोः । समुन्नतम् - औन्नत्ययुतं । नयनयोः - नेत्रयोः । अत्यायतम् - अतिविशालम् । एतत् - पुरोवर्ति । मम । जीवितं - प्राणभूतामाळविका। आयाति - आगच्छति । सखे - वयस्यगौतम । तत्रभवती - पूज्यामाळविका। पूर्वस्मात् - प्राचीनान्नेपथ्यात् । अतिमनोहरम् - अतीवमनोज्ञम् ।अवस्थान्तरं - रूपान्तरम् । उपारूढा - प्राप्ता । तथाहि - तदेवोपपादयति । शरेति ॥ माधवपरिणतपत्रा - माधवे - वैशाखमासे । परिणतपत्रा - पक्वपर्णा । कतिपयकुसुमा - विरळपुष्पा । कुन्दलता - मल्लिकावल्लीव । शरकाण्डपाण्डुगण्डस्थला । शरकाण्डवत् - शरतृणपुष्पवत् । पाण्डु - हरिणव

र्णं । गण्डस्थलं - कपोलप्रदेशोयस्यास्सातथोक्ता । परिमिताभरणा - स्तोकालंकारा । इयम् - एषाबाला । आभाति - प्रभासते ॥

---

विदू ॥ एसावि भवंविअ मअणव्वाहिणा परिमिट्टा भविस्सदि ॥ छा ॥ एषापि भवानिव मदनव्याधिना परिमृष्टा भविष्यति ॥

---

विदूषकइति ॥ विदूषकः । ब्रूते । राजन् । भवानिव । एषा-माळविकापि । मदनव्याधिना - मन्मथपीडया । परिमृष्टा - व्याप्ता । भविष्यति - सम्पत्स्यते ॥

---

राजा ॥ सौहार्द मेवं पश्यति ॥

---

राजेति ॥ राजा । प्राह । सखे । सौहार्दं - प्रेम । एवम् - अनेनप्रकारेण । पश्यति - विलोकयति ॥

---

माळ ॥ अअं सो ललिदसुउमारदोहळापेक्खी अगिहीदकुसुमणेवत्थो उक्कण्ठिदाए मह असोओ सोअं अणुकरेदि। जाव से पच्छाअसीअळे सिळापट्टए णिसण्णा अत्ताणं विणोदेमि ।छा॥ अयं स ललितसुकुमारदोहदापेक्षी अगृहीतकुसुमनेपथ्य उत्कण्ठिताया म माशोक श्शोक मनुकरोति । यावदस्य प्रच्छायशीतले शिलापट्टे निषण्णा आत्मानं विनोदयामि ॥

---

माळविकेति ॥ माळविका । वक्ति । ललितसुकुमारदोहदापेक्षी - मनोज्ञमृदुलपुष्पोत्पादकक्रियाविशेषाश्रयी । अगृहीतकुसुमनेपथ्यः-

अजातपुष्पप्रसाधनः। सः - प्रक्रान्तः। अयम् - एषः। अशोकः - तपनीयाशोकवृक्षः। उत्कण्ठितायाः - विरहपर्युत्सुकायाः। मम। शोकं - व्यथाम्। अनुकरोति - अनुसरति। अस्य - एतस्याशोकस्य। प्रच्छायशीतले - प्रकृष्टच्छायाशिशिरे। शिलापट्टे - अश्मफलके। निषण्णा - उपविष्टा। आत्मानम् - मां। यावद्विनोदयामि - सुखयिष्यामि। सू॥ यावत्पुरानिपातयोर्लडिति भविष्यदर्थेलट्॥

---

विदू॥ सुदं भवदा उक्कण्ठिदम्हित्ति अत्तभोदी मन्तेदि। छा॥ श्रुतं भवता। उत्कण्ठितास्मी त्यत्रभवती मन्त्रयते॥

---

विदूषकइति॥ विदूषकः। ब्रूते। अत्रभवती - पूज्यामाळविका। उत्कण्ठिता - पर्युत्सुका। अस्मि - भवामीति। मन्त्रयते - तर्कयति। एतत्। भवता - त्वया। श्रुतम् - आकर्णितं किमितिकाकुः॥

---

राजा॥ नैतावता भवन्तं प्रसन्नतर्कं मन्ये। कुतः॥

श्लो॥ वोढा कुरवकरजसां किसलयपुटभेदशीकरानुगतः।
अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः॥

---

राजेति॥ राजा। प्राह। विदूषक। एतावता - उत्कण्ठितास्मीतिवाङ्मात्रेण। भवन्तम् - त्वां। प्रसन्नतर्कं - समीचीनसम्भावनम्। नमन्ये - नतर्कयामि। कुतः - कस्मादितिचेत्। वोढेति॥ कुरवकरजसां - कुरवकपुष्पपरागाणां। सू॥ कर्तृकर्मणोः कृतीतिकर्मणिषष्टी॥ वोढा - धारकः। अनेनसौरभ्यंसूचितं। किसलयपुटभेदशीकरानुगतः - किसलयानां - नवपल्लवानां। पुटान् - मुकुळनानि। भिनत्तीतितथोक्तः। तथा। शीकरानुगतः - अम्बुकणानुसृतः। अनेनशीतलत्वमुक्तं। द्वयोः कर्मधारयः। मलयवातः - मलयाचलमारुतः। मनसः - चित्तस्य। अनिमित्तोत्कण्ठां

- अकारणोत्सुकत्वमपि। जनयति - उत्पादयति ॥ इयमुत्कण्ठानास्मन्नि मित्तैवेतिभावः ॥

---

मालविकोपविष्टा ॥

---

मालविकेति ॥ मालविका। उपविष्टा - निषण्णा। अश्मफलकइतिशेषः ॥

---

राजा ॥ सखे! इतस्तावदावां लतान्तरितौ भवावः॥

---

राजेति ॥ राजा। प्राह। सखे - वयस्य। आवाम्। इतः - अत्र। लतान्तरितौ - वल्लीभिराच्छादितौ। तावद्भवावः - भविष्यावः ॥

---

विदू ॥ इरावदिं विअ अदूरे पेक्खामि । छा ॥ इरावतीमिवादूरे पश्यामि ॥

---

विदूषकइति ॥ विदूषकः। वक्ति। राजन्। अदूरे - समीपे। इरावतीम् - एतन्नामिकां तवद्वितीयपत्नीमिव। पश्यामि - विलोकयामि ॥ एतच्चराज्ञस्त्रासनार्थमुक्तम् ॥

---

राजा ॥ नहि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतंगजः। इतिविलोकयन् स्थितः ॥

---

राजेति ॥ राजा। प्राह। मतङ्गजः - गजः। कमलिनीं - पद्मलतां। दृष्ट्वा - वीक्ष्य। ग्राहम् - मकरम्। अवेक्षतेनहि - नपश्यतिखलु ॥ इति - एवमुक्त्वा। विलोकयन् - पश्यन्। स्थितः - वर्ततेस्म ॥

---

माळ ॥ हिअअ ! णिरवळंबणादो अदिभूमिळंघिणो मणारहादो विरम । किं मं आआसिअ । छा ॥ हृदय ! निरवलम्बना दतिभूमिलंघिनो मनोरथा द्विरम । किं मा मायास्य ॥

---

माळविकेति ॥ माळविका । वक्ति । किमिति । हेहृदय -चित्त । निरवलम्बनात् - आलम्बनशून्यात् । अतिभूमिलंघिनः - बहुदूरगामिनः । मनोरथात् - अभिलाषात् । विरम - निवर्तस्व । मां । आयास्य - क्लेशयित्वा । किं - किंप्रयोजनम् । नकिञ्चिदित्यर्थः ॥

---

विदूषको राजानं वीक्षते ॥

---

विदूषकइति ॥ विदूषकः - गौतमः । राजानम् - नृपम् । वीक्षते - विलोकयति ॥

---

राजा ॥ पश्य महत्त्वं स्नेहस्य ॥

श्लो ॥ औत्सुक्यहेतुं विवृणोषि न त्वं
तत्त्वावबोधैकफलो न तर्कः ।
तथापि रम्भोरु ! करोमि लक्ष्य
मात्मान मेषां परिदेवितानाम् ॥४५॥

---

राजेति ॥ राजा । प्राह । प्रिये । स्नेहस्य - प्रेम्णः । महत्वम् - महिमानम् । पश्य - विलोकय । तथाहि । औत्सुक्यमिति ॥ हेरम्भोरु - मोचास्तम्भतुल्यसक्थिके । त्वं । औत्सुक्यहेतुम् - उत्कण्ठाकारणं । नविवृणोषि - नस्पष्टीकरोषि । तर्कः - सम्भावना । तत्त्वावबोधैकफलः - तत्त्वस्य - याथार्थ्यस्य । अवबोधः -निश्चयएव । एकम् - मुख्यम् । फलं । यस्यतथाभूतः । न - नभवति । तथापि - तत्वज्ञानाभावेपि । आत्मानम्-

मां। एषाम् - त्वत्कृतानाम्। परिदेवितानां - विलपितानां। लक्ष्यम् - उद्देश्यम्। करोमि - विदधामि॥ कामीस्वतां पश्यतीतिवत् भवत्कृत परिदेवनं मदुद्देश्यमेवेति तर्कयामीत्यर्थः॥

---

विदू॥ संपदं भवदो णिस्संसअं भविस्सदि। एसा अप्पिदमअणसंदेसा विवित्ते णं वउळावलिआ उवगदा। छा॥ साम्प्रतं भवतो निस्संशयं भविष्यति। एषार्पितमदनसन्देशा विविक्ते ननु वकुलावळि कोपगता॥

---

विदूषकइति॥ विदूषकः। वक्ति। राजन्। भवतः - तव। साम्प्रतम् - अधुना। निस्संशयं - संशयराहित्यं। भविष्यति - सम्पत्स्यते। कुतः। अर्पितमदनसन्देशा - अर्पितः - मयासंप्रेषितः। मदनसन्देशः - भवदुक्तिरूपमन्मथविषयक वाचिकं यस्यास्सातथाभूता। एषा - इयम्। वकुलावळिका - एतन्नामिकासखी। विविक्ते - रहसि। उपगतानु - उपस्थिताहि॥

---

राजा॥ अपिस्मरे देषास्मदभ्यर्थनां?॥

---

राजेति॥ राजा। प्राह। एषा - वकुलावळिका। अस्मदभ्यर्थनाम् - अस्माकंप्रार्थनां। स्मरेदपि - चिन्तयतिकिम्। नि॥ गर्हासमुच्चयप्रश्न शङ्कासम्भावनास्वपी त्यमरः॥

---

विदू॥ किं दाणिं एसा दासीएदुहिदादाव गुरुअं संदेसं विसुमरेदि?। छा॥ किमिदानी मेषा दास्यादुहितातावद्गुरुकं सन्देशं विस्मरति॥

---

विदूषकइति ॥ विदूषकोवदति । एषा - इयम् । दास्यादुहिता - दास्याःपुत्रीत्रकुलावळिका । आक्रोशोक्तिरियम् । सू॥ षष्ट्याआक्रोश इत्यलुक् ॥ तावद्गुरुकं - तादृशंमहान्तं । सन्देशं - वाचिकम् । इदानीं - अद्य । विस्मरतिकिं - विस्मृतिंप्राप्नोतिवा ॥

---

प्रविश्य चरणालङ्कारहस्ता वकुलावळिका ॥ अविसुहं सहीए । छा ॥ अपिसुखं सख्यै ॥

---

प्रविश्येति ॥ चरणालङ्कारहस्ता - करगृहीतचरणाभरणा । वकुलावळिका - तन्नाम्नीसखी । प्रविश्य -समीपंप्राप्य । ब्रवीति । सख्यै - प्रियायैमाळविकायै । अपिसुखं - शर्मकिम् ॥

---

माळ ॥ अम्मो वउळावलिआ उवट्ठिदा ! । सागदं दे ? उवविस । छा ॥ अहह वकुलावळि कोपास्थिता । स्वागतं ते । उपविश ॥

---

माळविकेति ॥ माळविका । ब्रूते । वकुलावळिका । उपस्थिता - समागता । अहह - आश्चर्यं । ते - तुभ्यं । स्वागतम् - शुभागमनं किम् । उपविश - निषीद ॥

---

वकुला ॥ उपविश्य ॥ हळा तुमं दाणिं जोग्गदाए णिउत्ता । एक्कं दे चळणं उवणेहि जाव साळत्तअं सणेउरं करेमि । छा ॥ हला त्व मिदानीं योग्यतया नियुक्ता । एकं ते चरणमुपनय यावत्सालक्तकं सनूपुरं करोमि ॥

---

वकुलावळिकेति ॥ वकुलावळिका । उपविश्य - निषद्य । वक्ति ।

हला-सखि। इदानीं-एतर्हि। त्वं। योग्यतया-अर्हतया। नियुक्ता-आज्ञप्ता। तस्मात्। एकं। ते-तव। चरणम्-पादम्। उपनय-प्रापय। मामितिशेषः। यावत्-यावत्ताकालेन। सालक्तकम्-सलाक्षारसं। सनूपुरम्-समञ्जीरञ्च। करोमि-रचयामि॥

---

माळ॥ स्वगतम्॥ हिअअ! अळं सुहिदाए। उवठ्ठिदो अअं विहओत्ति। कहं दाणिं अत्ताणं मोचेअं। अहवा एदं एव्व मे मिच्चुमण्डणं भविस्सदि। छा॥ ... हृदय! अलं सुखितया। उपस्थितोऽयं विभवइति। कथ मिदानी मात्मानं मुञ्चेयम्। अथ वैतदेव मे मृत्युमण्डनं भविष्यति॥

---

माळविकेति॥ माळविका। स्वगतम्-आत्मगतंयथातथाव क्ति। हे हृदय-चित्त। अयम्-एषः। विभवः-वैभवम्। उपस्थितः-सम्प्राप्तइति। सुखितया-शर्मवत्त्वेन। अलम्-मास्तु। इदानीं-अद्य। कथम्-केनप्रकारेण। आत्मानं-मां। मुञ्चेयं-मोचयेयम्। अथवा-तथानोचेत्। एतत-इदमेव। मे-मम। मृत्युमण्डनम्-मृत्युप्रायालंकरणं। भविष्यति-सम्पत्स्यते॥

---

वकुला॥ किं विआरेसि। उस्सुआखु इमस्स तवणीआसोअस्स कुसुमोग्गमे देवी। छा॥ किं विचारयसि। उत्सुका खु त्वस्य तपनीयाशोकस्य कुसुमोद्गमे देवी॥

---

वकुलावळिकेति॥ वकुलावळिका। वदति। सखि। किं-किमर्थं। विचारयसि-आलोचयसि। देवी-पट्टमहिषी। अस्य-अमुष्य। तपनीयाशोकस्य-एतन्नामकवृक्षविशेषस्य। कुसुमोद्गमे-पुष्पोत्पादनेविषये। उत्सुकाखलु-समुत्कण्ठिताहि॥

---

राजा ॥ कथ मशोकदोहदनिमित्तोऽय मारम्भः ॥

---

राजेति ॥ राजा । प्राह । अयम् - एषः । आरम्भः - उपक्रमः । अशोकदोहदनिमित्तःकथं - तपनीयाशोकदोहदक्रियाकारणःकिम् ॥

---

विदू ॥ किक्खु णआणासि । अक्कारणादो देवी इमं अंतिउरणेवत्थेण जोजइस्सदित्ति । छा ॥ किंखलु नजानासि । अकारणा देवी इमा मन्तःपुरनेपथ्येन योजयिष्यतीति ॥

---

विदूषकइति ॥ विदूषकः । कथयति । राजन् । त्वं । नजानासि किंखलु - इदंनवेत्सिवा । खल्विति वाक्यालंकारे । देवी - पट्टमहिषी। अकारणात् - कारणंविना । इमां - एतांमाळविकां । अन्तःपुरनेपथ्येन - शुद्धान्तवधूजनोचितप्रसाधनेन । योजयिष्यति -संबन्धयिष्यतीतिकाकुः । इति - एवं । नजानासीतिपूर्वेणान्वयः ॥

---

माळ ॥ हळा मरिसेहि दाणिं । इति पाद मुपहरति छा ॥ हला मर्ष येदानीं … ॥

---

माळविकेति ॥ माळविका । वक्ति । हला-सखि । इदानीं-अद्य । मर्षय - क्षमस्व । इति - एवमुक्त्वा । पादम् - चरणम् । उपहरति- प्रसारयति ॥

---

वकुला ॥ अइ सरीरंसि मे । इति नाट्येन चरणसंस्कार मारभते । छा ॥ अयि शरीर मसि मे … ॥

---

वकुलावलिकेति ॥ वकुलावलिका । वदति । अयि - माळविके । त्वं । मे - मम । शरीरं - वपुः । असि - भवसि । इति - इत्थमुक्त्वा । नाट्येन - अभिनयेन । नि ॥ वाक्यार्थाभिनयोनाट्य मिति मेदिनी ॥ चरणसंस्कारं - पादालंकारं । आरभते - उपक्रमते ॥

---

राजा ॥

श्लो ॥ चरणान्तनिवेशितां प्रियाया
स्सरसां पश्य वयस्य! रागरेखाम्।
प्रथमामिव पल्लवप्रसूतिं
हरदग्धस्य मनोभवद्रुमस्य ॥४६॥

---

राजेति ॥ राजा । आह । किमिति । चरणेति ॥ हे वयस्य - सखे । प्रियायाः - प्रेयस्याः । चरणांतनिवेशितां - पादोपान्तलिखितां । सरसाम् - आर्द्रां । रागरेखां - लाक्षालेखां । हरदग्धस्य - शूलिनाभस्मीभूतस्य । मनोभवद्रुमस्य - मन्मथपादपस्य । प्रथमाम् - आद्याम् । पल्लवप्रसूतिं - किसलयोत्पत्तिमिव । पश्य - अवलोकय ॥

---

विदू ॥ चलणाणुरूवो तत्तभोदीए अहिआरो उवक्खित्तो । छा ॥ चरणानुरूप स्तत्रभवत्या अधिकार उपक्षिप्तः॥

---

विदूषकइति ॥ विदूषकः । वदति । तत्रभवत्याः - पूज्यायाः माळविकायाः । चरणानुरूपः - पादानुगुणः । अधिकारः - नियोगः । उपक्षिप्तः - समागतः ॥

---

राजा ॥ सम्य गाह भवान् ॥

श्लो ॥ नवकिसलयरागे णार्द्रपादेन बाला

स्फुरितनखरुचा द्वौ हन्तु मर्हत्यनेन।
अकुसुमित मशोकं दोहदापेक्षयावा
प्रणमितशिरसंवा कान्त मार्द्रापराधम् ॥४७॥

---

राजेति ॥ राजा। प्राह। भवान्। सम्यक् - समीचीनं यथात था। आह - वदति। कुतः। नवेति ॥ बाला - मालविका। अनेन - एतेन। नवकिसलयरागेण - नूत्नपल्लवारुणेन। स्फुरितनखरुचा - प्रकाशित नखद्युतिना। आर्द्रपादेन - लाक्षारसार्द्रचरणेन। दोहदापेक्षया - पुष्पोत्पादकक्रियाविशेषदानहेतुना। अकुसुमितं - अपुष्पितं। अशोकं - तपनीयाशोकंवा। आर्द्रापराधम् - नूतनागसम्। प्रणमितशिरसं - नम्रमूर्धानं। कान्तंवा - प्रियञ्च। एतौद्वौ। हन्तुं - ताडयितुम्। अर्हति - उचिता भवति ॥

---

विदू ॥ पारइस्ससि तत्तभोदीए अवरद्धुं ? ।छा ॥ पारयिष्यसि तत्रभवत्या मपराद्धुम् ॥

---

विदूषकइति ॥ विदूषकः। ब्रवीति। राजन्। तत्रभवत्यां - मालविकायामपि। अपराद्धुम् - अपराधंकर्तुं। पारयिष्यसि - शक्ष्यसि किमितिकाकुः ॥

---

राजा ॥ मूर्ध्ना प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य ॥

---

राजेति ॥ राजा। प्राह। सिद्धिदर्शिनः - कार्यसिद्धिपेक्षकस्य। ब्राह्मणस्य - भूसुरस्य। वचः - वचनम्। मूर्ध्ना - शिरसा। प्रतिगृहीतं - धृतम् ॥

---

ततः प्रविशति युक्तमदा इरावती चेटीच ॥

---

ततइति ॥ ततः - अनन्तरम् । युक्तमदा - आसवनिषेवणेन मद युक्ता । इरावती - एतन्नाम्नीराज्ञोद्वितीयपत्नी । चेटी - दासीच । प्रविशति - रङ्गस्थलंप्राप्नोति ॥

---

इरावती ॥ हञ्जे णिउणिए ! सुणामि बहुसो मदोकिळ इत्थिआअणस्स विसेसमण्डणंति । अवि सच्चो अअं ळोअवादो । छा ॥ हञ्जे निपुणिके ! शृणोमि बहुशो मदःकिल स्त्रीजनस्य विशेषमण्डनमिति । अपि सत्योऽयं लोकवादः ॥

---

इरावतीति ॥ इरावती । कथयति । हञ्जेनिपुणिके - एतन्नामिकेचेटि । मदः - आसवपानजनितमदः । स्त्रीजनस्य - युवतीलोकस्य । विशेषमण्डनम् - अधिकालंकारःकिल । इति - एवं । बहुशः - अतीव । शृणोमि - आकर्णयामि । अयम् - एषः । लोकवादः - कौलीनं । सत्योऽपि - यथार्थःकिम् ॥

---

निपुणिका ॥ पढमं ळोअवादो एव्व संपदं सच्चो संवुत्तो । छा ॥ प्रथमं लोकवादएव साम्प्रतं सत्य स्संवृत्तः ॥

---

निपुणिकेति ॥ निपुणिका । वदति । हे देवि । प्रथमं - प्राक् । लोकवादः - जनश्रुतिरेव । साम्प्रतम् - इदानींतु । सत्यः - यथार्थः । संवृत्तः - जातः ॥

---

इरा ॥ अळं अइ सिणेहेण । कहेहि कुदो दाणि अवग स्सिदव्वं दोळाघरं पडमागदो भट्टा णवेत्ति । छा ॥ अलं अयि

स्नेहेन। कथयकुत इदानी मवगन्तव्यम्। डोलागृहं प्रथम मागतो भर्ता नवेति ॥

---

इरावतीति ॥ इरावती। ब्रवीति। अयि - निपुणिके। स्नेहेन - प्रेम्णा। अलं - पर्याप्तं। कुतः। भर्ता - विभुः। प्रथमं - आदौ। डोलागृहं - डोलिकागारम्। आगतः - आयातः। नवा - नायातोवा। इति - इत्थं। कुतः - कथंवा। इदानीं - अद्य। अवगन्तव्यम् - ज्ञातव्यं। कथय - वद ॥

---

निपु ॥ भट्टिणीए अखंडिदादो पणआदो। छा ॥ भट्टिन्या अखण्डिता त्प्रणयात् ॥

---

निपुणिकेति ॥ निपुणिका। वदति। भट्टिन्याः - महाराजप त्न्यास्तव। अखण्डितात् - अविच्छिन्नात्। प्रणयात् - स्नेहात्। समागत इतिशेषः ॥

---

इरा ॥ अळं सेवाए। मज्झत्थदं परिगहिअ भणाहि। छा ॥ अलं सेवया। मध्यस्थतां परिगृह्य भण ॥

---

इरावतीति ॥ इरावती। वक्ति। सेवया - प्रीतिवाक्येन। अलम् - कृतम्। मधयस्थताम् - माधयस्थ्यम्। परिगृह्य - अवलम्ब्य भण - कथय ॥

---

निपु ॥ णं वसंतोस्सवुवाअणळोळुवेण अज्जगोदमेण कहिअं। तुअरदु भट्टिणी। छा ॥ ननु वसन्तोत्सवोपायनलोलुपेन आर्यगौतमेन कथितं। त्वरतां भट्टिनी ॥

---

निपुणिकेति ॥ निपुणिका । ब्रवीति । ननु - राज्ञि । वसन्तोत्सवोपायनलोलुपेन - वसन्तोत्सवोपहारभूतभोज्याभिलाषुकेण । आर्यगौतमेन - पूज्यगौतमनामकविदूषकेण । कथितं-उक्तं । त्वद्वाचिकमितिशेषः । भट्टिनी - राजपत्नी । त्वरताम् - शैघ्र्यंकरोतु ॥

---

**इरा ॥ अवस्थासदृशं परिक्रम्य ॥ हञ्जे मदेण मिळाअमाणं अत्ताणं अज्जउत्तस्स दंसणे हिअअं तुअरावेदि चळणाउण णओसळंति । छा ॥ ... हञ्जे ! मदेन म्लायमान मात्मान मार्यपुत्रस्य दर्शने हृदयं त्वरयति, चरणौपुन र्नप्रसरतः ॥**

---

इरावतीति ॥ इरावती । अवस्थासदृशम् - प्रकृतमदावस्थानुरूपंयथातथा । परिक्रम्य - किञ्चिद्गत्वा । कथयति । हञ्जे - निपुणिके । हृदयम् - स्वान्तम् । मदेन - आसवपानजनितमदेन । म्लायमानम् - ताम्यमानम् । आत्मानं - मां । आर्यपुत्रस्य - भर्तुः । दर्शने - अवलोकने । त्वरयति - त्वरांजनयति । चरणौपुनः - पादौतु । नप्रसरतः - पुरतो नचलतः ॥

---

**निपु ॥ णं सम्पत्तम्ह दोळाघरअं । छा ॥ ननु सम्प्राप्ते स्वोडोलागृहकम् ॥**

---

निपुणिकेति ॥ निपुणिका । वदति । ननु - राज्ञि । डोलागृहकम् -डोलिकागारं । सम्प्राप्ते-उपगते । स्वः - भवावः । आवामितिशेषः ॥

---

**इरा ॥ णिउणिए ! अज्जउत्तो एत्थ णदीसदि । छा ॥ निपुणिके ! आर्यपुत्रोऽत्र नदृश्यते ॥**

---

इरावतीति ॥ इरावती । वदति । हे निपुणिके । अत्र - अस्मिन्प्रदेशे । आर्यपुत्रः - भर्ता । नदृश्यते - नवीक्षयते ॥

---

निपु ॥ णं भट्टिणी आळोएदु । परिहासणिमित्तं कहिंपि गूढेण भट्टिणा होदव्वं । अम्हेवि इमंपिअंगुळदापरिक्खित्तं असोअसिळापट्टअं पविसामो ।छा॥ ननु भट्टि न्यवलोकयतु। परिहासनिमित्तं कुत्रापि गूढेन भर्त्रा भवितव्यं । आवामपीदं प्रियंगुलतापरिक्षिप्त मशोकशिलापट्टकं प्रविशावः ॥

---

निपुणिकेति ॥ निपुणिका । वक्ति । भट्टिनीननु - राजपत्नीतावत् । अवलोकयतु - पश्यतु । भर्त्रा - पत्याराज्ञा । परिहासनिमित्तं - केळीकारणेन । कुत्रापि - कस्मिंश्चित्प्रदेशे । गूढेन - प्रच्छन्नेन । भवितव्यं - स्थातव्यम् । तस्मात् । आवामपि । प्रियंगुलतापरिक्षिप्तं - फलिनीवल्लिकाच्छादितं । इदं - पुरोवर्ति । अशोकश्लिापट्टकम् - अशोकाधस्थितग्रावफलकम् । प्रविशावः - प्राप्नुवः ॥

---

इरा ॥ तहा ।छा ॥ तथा ॥

---

इरावतीति ॥ इरावती । वदति । हञ्जे । तथा-तेनप्रकारेण । अस्त्वित्यध्याहारः ॥

---

निपु ॥ विलोक्य । आळोअदु भट्टिणी चूदंकुरं विचिण्णंतीणं अम्हाणं पिपीळिआहिं दंसिदं ।छा ॥ ... आलोकतां भट्टिनी चूताङ्कुरं विचिन्वत्यो रावयोः पिपीलिकाभि र्दष्टं॥

---

निपुणिकेति ॥ निपुणिका । विलोक्य - किञ्चिद्दृष्ट्वा । वदति । भट्टिनी - राज्ञी । आलोकतां - प्रेक्षतां । चूताङ्कुरम् - रसालपल्लवम् । विचिन्वत्योः - मृगयन्त्योः । आवयोः । पिपीलिकाभिः - एतन्नामकजन्तुभिः । दष्टं - दंशनंकृतम् । सू ॥ नपुंसकेभावेक्तः ॥ भविष्यत्सपत्नीभयादेवमुक्तम् ॥

---

इरा ॥ किंविअ एदं ? । छा ॥ किमि वैतत् ॥

---

इरावतीति ॥ इरावती । वक्ति । निपुणिके । एतत् - इदमत्रदुक्तम् । किमिव - कीदृशं । किमर्थकमित्यर्थः ॥

---

निपु ॥ एसा असोअपादवच्छाआए मालविआए वउळावलिआ चळणाळंकारं णिव्वत्तेदि । छा ॥ एषाऽशोकपादपच्छायायां माळविकाया वकुलावळिका चरणालंकारं निर्वर्तयति ॥

---

निपुणिकेति ॥ निपुणिका । कथयति । किमिति । राज्ञि । एषा - पुरोदृश्यमाना । वकुलावळिका । अशोकपादपच्छायायां - तपनीयाशोकनामकवृक्षाधःप्रदेशे । माळविकायाः । चरणालङ्कारम् - पादमंडनं । निर्वर्तयति - निष्पादयति ॥

---

इरा ॥ शंकां रूपयित्वा ॥ अभूमी इअं मालविआए । कहं एत्थ तक्केसि । छा ॥ ... अभूमि रियं माळविकायाः । कथमत्र तर्कयसि ॥

---

इरावतीति ॥ इरावती । शंकां - वितर्कं । रूपयित्वा - अभिनीय । ब्रवीति । माळविकायाः । इयम् - एषा । अभूमिः - सञ्चारार्ह

प्रदेशोनभवति । तस्मात् । अत्र - अस्मिन्प्रदेशे । कथम् - केनवाप्रकारेण । तर्कयसि - ऊहसे ॥

---

निपु ॥ तक्केमि डोळापरिब्भंसिदसरुजचळणाए देवीए असोअदोहळाधिआरे माळविया णिउत्तेत्ति । अण्णहा कहं देवी सअंधारिदं एदं णेउरजुअळं परिअणस्स अब्भणुजाणिस्सदि । छा ॥ तर्कयामि डोलापरिभ्रष्टसरुजचरणया देव्या अशोकदोहदाधिकारे माळविका नियुक्तेति । अन्यथा कथं देवी स्वयंधारित मेत न्नूपुरयुगळं परिजन स्याभ्यनुज्ञास्यति ॥

---

निपुणिकेति ॥ निपुणिका । कथयति । डोलापरिभ्रष्टसरुजचरणया - डोलायाः - डोलिकातः । परिभ्रष्टा - परिपतिता । अतएव । सरुजचरणा - सव्यथपादा-तया । देव्या - पट्टमहिष्या । माळविका । अशोकदोहदाधिकारे - तपनीयाशोकपुष्पोत्पादनोद्योगे । नियुक्ता - आज्ञप्तेति । तर्कयामि - ऊहांकरोमि । अन्यथा - एवमेवनोचेत् । देवी - पट्टमहिषी । स्वयंधारितम् - आत्मनाधृतम् । एतत् - इदं । नूपुरयुगळं - मञ्जीरयुग्मं । परिजनस्य - परिवारजनस्य । कथं-केनहेतुना । अभ्यनुज्ञास्यति - अंगीकरिष्यति ॥

---

इरा ॥ महदी मे संभावणा । छा ॥ महती मे सम्भावना ॥

---

इरावतीति ॥ इरावती । वदति । मे - मम । सम्भावना - वितर्कः । महाती - अभ्यधिका ॥

---

निपु ॥ किं णअण्णेसीअदि भट्टा । छा ॥ किं नान्विष्यते भर्ता ॥

निपुणिकेति ॥ निपुणिका । वक्ति । भर्ता - पतिः । नान्विष्य तेकिं - नमृग्यतेकिं । अनयेतिशेषः ॥

इरा ॥ हञ्जे ! मे चळणा अग्गदोणप्पवट्टंति । मदो मं वि आरेदि । आसंकिदस्स दाव अंतं गमिस्सं। माळविकां निरूप्यआत्मगतम् ॥ ठाणेक्खु कादरं मे हिअअं । छा ॥ हञ्जे ! मम चरणा वग्रतो नप्रवर्तेतां । मदो मां विकारयति । आशंकितस्य ताव दन्तं गमिष्यामि ··· स्थानेखलु कातरं मे ह्लदयम् ॥

इरावतीति ॥ इरावती । वदति । हञ्जे - चेटि निपुणिके । मम । चरणौ - पादौ । अग्रतः - पुरतः । नप्रवर्तेतां - नप्रसरतां । मदः - आसवपानजनितोद्वेगः । मां । विकारयति - व्याकुलयति । तावत् - इदानीं । आशंकितस्य - भर्तुरस्यामनुरागस्स्यान्नवेति तर्कितस्यार्थस्य । अन्तं - निश्चयम् । गमिष्यामि - प्राप्स्यामि । इत्युक्त्वा । माळविकां । निरूप्य - निर्वर्ण्य । आत्मगतम् - स्वगतम् । वदति । मे - मम । हृदयम् - चित्तं । कातरं - भयविशिष्टम् । स्थानेखलु - इदंयुक्तमेव ॥

वकुला ॥ चरणं दर्शयति ॥ किंवि ? रोअदि दे राअरेहाविण्णासो । छा ॥ ··· किमपि ? रोचते ते रागरेखाविन्यासः ॥

वकुलावळिकेति ॥ वकुलावळिका । माळविके । ते - तुभ्यं । रागरेखाविन्यासः - लाक्षारसलेखानिक्षेपः । रोचतेऽपिकिं - प्रीतिंजनयति वा । इत्युक्त्वा । चरणम् - स्वालंकृतंतदीयंपादम् । दर्शयति - प्रेक्षयति ॥

माळ ॥ अत्तणो चळणंसि ळज्जेमि णं पसंसिदुं । केण ?

सिप्पसाहणकलाए एव्वं अभिणीदासि । छा ॥ आत्मन श्चरण मिति लज्जे एत त्प्रशंसितुम् । केन ? शिल्पसाधनकळायामे व मभिनीतासि ॥

---

माळविकेति ॥ माळविका । वदति । सखि ! आत्मनः- स्वस्य । चरणम् - पादः । इति - अनेनहेतुना । एतत् - इदम् । प्रशंसितुं - स्तोतुं । लज्जे - जिन्हेमि । केन । शिल्पसाधनकळायां - प्रसाधनादिचित्रविद्यायाम् । एवम् - अनेनप्रकारेण । अभिनीता - शिक्षिता । असि - भवसि ॥

---

वकुला ॥ एत्थक्खु भट्टिणो सिस्सम्हि । छा ॥ अत्रखलु भर्तुश्शिष्यास्मि ॥

---

वकुलावळिकेति ॥ वकुलावळिका । वक्ति । अहम् । अत्र - शिल्पसाधनकळायां । भर्तुः-राज्ञः । शिष्या - छात्रा । अस्मि-भवामिखलु ॥

---

विदू ॥ तुवरेहि दाणिं गुरुदक्खिणाए । छा ॥ त्वरय स्वेदानीं गुरुदक्षिणायै ॥

---

विदूषकइति ॥ विदूषकः । वदति । राजन् । इदानीं - अद्य । गुरुदक्षिणायै - गुरवे दक्षिणांदातुं । त्वरयस्व - त्वरांकुरु । वकुलावळिकामितिशेषः ॥

---

माळ ॥ दिट्ठिआ णगव्विदासि? । छा ॥ दिष्टया नगर्वितासि? ॥

---

माळविकेति ॥ माळविका । ब्रवीति । हला । दिष्ट्या - दैवात् । नगर्विता - गर्वंनगता । असि - भवसि ॥

---

बकुला ॥ उवदेसाणुरूवे चळणे ळंभिअ दाणिं गव्विदा भविस्सं। रागंविलो कयात्मगतम्। हंत सिद्धो मे दप्पो। प्रकाशम्। सहि एक्कस्स दे चळणस्स अवसिदो राअणिक्खेवो। केवळं मुहमारुदो ळंभइदव्वो। अहवा पवादं एव्व एदं ठाणं। छा॥ उवदेशानुरूपे चरणे लब्ध्वा इदानीं गर्विता भविष्यामि ... हन्त सिद्धो मे दर्पः ... सखि! एकस्य ते चरणस्यावसितो रागनिक्षेपः। केवलं मुखमारुतो लम्भयितव्यः। अथवा प्रवातमेवैतत्स्थानम् ॥

---

बकुलावळिकेत्यादि ॥ बकुलावळिका। कथयति। अहं। उपदेशानुरूपे - विद्योपदेशार्हे। चरणे - पादौ। लब्ध्वा - अलंकार्यत्वेन प्राप्य। इदानीम् - अद्य। गर्विता - गर्वयुक्ता। भविष्यामि - सम्पत्स्ये। रागम् - लाक्षारसरेखां। विलोक्य - वीक्ष्य। आत्मगतम् - स्वगतम्। प्राह। मे - मम। दर्पः - मदः। सिद्धः - उचितः। हन्तेतिहर्षे। प्रकाशम् - प्रकटंयथातथा। वदति। सखि - माळविके। एकस्य। ते - तव। चरणस्य - पादस्य। रागनिक्षेपः - अलक्तकविन्यासः। अवसितः - समाप्तः। मुखमारुतःकेवलं - वदनपवनएव। लम्भयितव्यः - प्रापणीयः। अथवा - तथानोचेत्। एतत् - इदम्। स्थानं - प्रदेशः। प्रवातम् - प्रचुरवातयुक्तमेव ॥

---

राजा ॥ सखे पश्य पश्य ॥

श्लो ॥ आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन शोषयतः।
प्रतिपन्नः प्रथमतरस्संप्रति सेवावकाशो मे ॥४८॥

---

राजेति ॥ राजा। प्राह। सखे - वयस्यगौतम। पश्यपश्य विलोकय। आदराद्विरुक्तिः। श्लोकोक्तवाक्यार्थःक्रम। आर्द्रेति ॥ अ द्रालक्तकम् - सार्द्रलाक्षारसम्। अस्याः - माळविकायाः। चरणम् - अं घ्रिं। मुखमारुतेन - फूत्कारेण। शोषयतः - शोषंकुर्वतः। नयतइत्यर्थः। मे - मम। सेवावकाशः - सेवनसमयः। प्रथमतरः - मुख्यतरः। संप्रति- अद्य। प्रतिपन्नः - प्राप्तः ॥

---

विदू ॥ कुदो दे अणुसओ ?। एदं भवदा चिर क्कमेण अणुभविदव्वं। छा ॥ कुत स्तेऽ नुशयः ?। एत द्भवता चिर क्रमे णानुभावितव्यम् ॥

---

विदूषकइति ॥ विदूषकः। वदति। राजन्। ते - तव। अनु शयः - उत्कण्ठा। कुतः - कस्मात्। जातइतिशेषः। एतत् - इदम्। भ वता - त्वया। चिरक्रमेण - चिरेण। अनुभवितव्यम् - भोग्यमेव ॥

---

वकुला ॥ सहि ! अरुणं सदपत्तंविअ सोहदि दे चळणं सव्वहा भट्टिणो अंकपरिवट्टिणी होहि। छा ॥ सखि ! अरुणं शतपत्रमिव शोभते ते चरणम्। सर्वधा भर्तु रंकपरिवर्तिनी भव ॥

---

वकुलावळिकेति ॥ वकुलावळिका। वदति। सखि - प्रिये। ते - तव। चरणम् - पादः। अरुणं - लोहितं। शतपत्रम् - पद्ममिव। शोभते - प्रकाशते। अतः। सर्वथा - सर्वप्रकारैः। भर्तुः - राज्ञः। अंक परिवर्तिनी - उत्सङ्गस्थायिनी। भव - एधि ॥

---

राजा ॥ म मेघ माशीः ॥

---

राजेति ॥ राजा । प्राह । इयम् - एषा । आशीः - शुभाशंसा । मम - मद्विषया । भवतीतिशेषः ॥

---

माळ ॥ हला मा अविणीअं मन्तेहि । छा ॥ हला मा अविनीतं मन्त्रयस्व ॥

---

माळविकेति ॥ माळविका । वक्ति । हला - सखि । अविनीतम् - अनुचितं । मामन्त्रयस्व - नपर्यालोचय ॥

---

वकुला ॥ मंतिदव्वं एव्व मए मंतिदं । छा ॥ मन्त्रयितव्यमेव मया मन्त्रितम् ॥

---

वकुलावळिकेति ॥ वकुलावळिका । वक्ति । मया । मन्त्रयितव्यम् - आलोचनीयमेवकार्यं । मन्त्रितम् - आलोचितम् ॥

---

माळ ॥ पिआक्खु अहं तव । छा ॥ प्रिया खल्वहं तव ॥

---

माळविकेति ॥ माळविका । वक्ति । अहं । तव । प्रिया - प्रेयसीखलु ॥

---

वकुला ॥ णकेवळं मम । छा ॥ नकेवलं मम ॥

---

वकुलावळिकेति ॥ वकुलावळिका । ब्रूते । ममकेवलं-ममैव । न - नप्रिया ॥

---

माळ ॥ कस्स ? वा अण्णस्स । छा ॥ कस्य वान्यस्य ? ॥

---

मालविकेति ॥ मालविका । वदति । सखि । अन्यस्य - इतरस्य । कस्य - कस्यचाजनस्य । प्रियास्मीतिशेषः ॥

---

वकुला ॥ गुणेसु अहिणिवेसिणो भट्टिणोवि । छा ॥ गुणेष्वभिनिवेशिनो भर्तुरपि ॥

---

वकुलावळिकेति ॥ वकुलावळिका । कथयति । गुणेषु - सौन्दर्यादिगुणेषु । अभिनिवेशिनः - पक्षपातिनः । भर्तुः - राज्ञोऽपि । प्रियासीतिशेषः ॥

---

माळ ॥ अळिअं मंतेसि । एदंएव्व मइ णत्थि । छा ॥ अळीकं मन्त्रयसे । एतदेव मयि नास्ति ॥

---

माळविकेति ॥ माळविका । वदति । त्वं । अळीकम् - असत्यंयथातथा । मन्त्रयसे - आलोयसे । मयि । एतत् - गुणवत्त्वमेव । नास्ति - नविद्यते । कुतस्तत्प्रियत्वमितिशेषः ॥

---

वकुला ॥ सच्चं तुइ णत्थि । भट्टिणो किसेसु सुन्दरपाण्डुरेसु दीसइ अंगेसु । छा ॥ सत्यं त्वयि नास्ति । भर्तुः कृशेषु सुन्दरपाण्डुरेषु दृश्यतेऽगेषु ॥

---

वकुलावळिकेति ॥ वकुलावळिका । वक्ति । प्रिये ! । त्वयि । नास्ति - नविद्यते । सौन्दर्यादिगुणवत्त्वमितिशेषः । सत्यम् - तथ्यमेव । किंतु । कृशेषु - कार्शययुक्तेषु । सुन्दरपाण्डुरेषु - ललितपाण्डुरवर्णेषु । भर्तुः - राज्ञः । अङ्गेषु - अवयवेषु । दृशयते - वीक्षयते । तत्कार्श्यदर्शनेनत्वय्यनुरागोऽनुमीयतइतिभावः ॥

निपु ॥ पढमं गणिदंविअ हदासाए उत्तरं । छा ॥ प्रथमं गणितमिव हताशाया उत्तरं ॥

निपुणिकेति ॥ निपुणिका । वदति । गणितं - गणितशास्त्रमिव । हताशायाः - नष्टाशायाः । उत्तरम् - भविष्यत्कार्यं । प्रथमं - पूर्वमेव । संकलितमितिशेषः ॥

वकुला ॥ अणुराओ अणुराएण परिक्खिदव्वोत्ति सुअणवअणं पमाणं करेहि । छा ॥ अनुरागोऽनुरागेण परीक्षितव्य इति सुजनवचनं प्रमाणं कुरु ॥

वकुलावळिकेति ॥ वकुलावळिका । वक्ति । हे प्रेयसि । अनुरागः - प्रेमा । अनुरागेण - प्रेम्णा । परीक्षितव्यः - परिशीलितव्यः । इति - एवंविधं । सुजनवचनम् - विबुधवचनम् । प्रमाणं - निर्णायकं । कुरु - विधेहि ॥

माळ ॥ किं अत्तणो छंदेण मन्तेसि ? । छा ॥ किं मात्मन श्छन्देन मन्त्रयसे ? ॥

माळविकेति ॥ माळविका । वक्ति । आत्मनः - स्वस्य । छन्देन - आशयेन । मन्त्रयसे - ऊहसे किम् ॥

वकुला ॥ णहि णहि । भट्टिणोक्खु एदाणि पणअमिदुआणि अक्खराणि विप्परिदाणि । छा ॥ नहिनहि । भर्तुःखल्वेतानि प्रणयमृदुका न्यक्षराणि विपरितानि ॥

---

वकुलावळिकेति ॥ वकुलावळिका । वदति । हे प्रिये । नहिन हि - तथान । परंतु । प्रणयमृदुकानि - स्नेहमृदुलानि । एतानि - गौतमोक्तानि । अक्षराणि - वचनानि । भर्तुः - राज्ञः । विप्रेरितानिखलु - सन्दिष्टान्येव ॥

---

माळ ॥ हळा देवीं चिंतिअ ण मे हिअअं विस्ससदि । छा ॥ हला देवीं चिन्तयित्वा न मे हृदयं विश्वसिति ॥

---

माळविकेति ॥ माळविका । वक्ति । हला - सखि । देवीं - पट्टमहिषीम् । चिन्तयित्वा - स्मृत्वा । मे - मम । हृदयम् - मनः । नविश्वसिति - विस्रम्भंनप्राप्नोति ॥

---

वकुला ॥ मुद्धे ! भमरसंबाधो अत्थित्ति वसंतावदारसंभूदो किं ? ण णवचूदप्पसवो ओदंसणिज्जो । छा ॥ मुग्धे ! भ्रमरसंबाधोऽस्तीति किं न वसन्तावतार संभूतो नवचूतप्रसवोऽवतंसनीयः ? ॥

---

वकुलावळिकेति ॥ वकुलावळिका । वदति । मुग्धे - अप्रौढे । वसन्तावतारसम्भूतः - वसन्तर्तुप्रादुर्भावसञ्जातः । नवचूतप्रसवः - अभिनवरसालपल्लवः । भ्रमरसम्बाधः - द्विरेफव्यथा । अस्ति - विद्यतइति । नावतंसनीयः - नकर्णाभरणी क्रियते किम् ॥

---

माळ ॥ तुमञ्जाव दुज्जादे गच्छन्तस्स सहाइणी होहि । त्वं यावद् दुर्याते गच्छत स्सहायिनी भव ॥

---

माळविकेति ॥ माळविका । ब्रवीति । सखि । त्वं । यावत् । साकल्येन । दुर्या ते - दुरधिगमेकार्यें । गच्छतः - उद्यमङ्गतस्यजनस्य । सहायिनी - सहकारिणी । भव - एधि ॥

---

वकुला ॥ विमद्दसुरही वउळावलिआक्खु अहं । छा ॥ विमर्दसुरभि र्वकुलावळिकाख ल्वहम् ॥

---

वकुलावळिकेति ॥ वकुलावळिका । कथयति । विमर्दसुरभिः- विमर्देन - पुरुषसम्पर्काभावेन । सुरभिः - खयातिसम्पन्ना । अहं । वकुलावळिका - वकुलावळिकाखया । अस्मिखलु । तथाच । वकुलावळी यथा मर्दनाभावेपि स्वतस्सिद्धसौरभ्यवती , तथाहमपीत्यर्थः । दुष्टचरितेनाहं सहायिनी , त्वचरितस्या दुष्टत्वान्न तत्रसहायभवनेमेदोषइत्यर्थः ॥

---

राजा ॥ साधु वकुलावळिके ! साधु ॥

श्लो ॥ भावज्ञानानन्तरं प्रस्तुतेन
प्रत्याख्याने दत्तयुक्तोत्तरेण ।
वाक्ये नेयं स्थापिता स्वे निदेशे
स्थाने प्राणाः कामिनो दूत्यधीनाः ॥४९॥

---

राजेति ॥ राजा । प्राह । हेवकुलावळिके । साधुसाधु - अतीवसमीचीनम् ॥ भावेति ॥ भावज्ञानानन्तरम् - तस्याः अनुरागरूपाभिप्रायवबोधोत्तरं । प्रस्तुतेन - प्रकृतप्रसङ्गेन । प्रत्याख्याने - निराकरणे । कृतेसतीतिशेषः । दत्तयुक्तोत्तरेण - उक्तोचितप्रतिवचनेन । वाक्येन - व्याहारेण । स्वे - स्वकीये । नियोगे - मन्निदेशे । इयं - माळविका । स्थापिता - प्रवेशिता । त्वयेतिशेषः । स्थाने - साम्प्रतमेव । कामिनः - कामुकजनस्य । प्राणाः - असवः । दूत्यधीनाः - दूत्यधीनाःखलु ॥

इरा ॥ हञ्जे! पेक्खव कारिदंएव्व वउळावलिए एदस्सि पदं मालविआए। छा ॥ हञ्जे! पश्य कारितमेव वकुलावल्या तस्मि न्पदं मालविकायाः ॥

इरावतीति ॥ इरावती । वदति । हञ्जे - चेटि । वकुलावल्या । मालविकायाः । पदम् - उद्यमः । तस्मिन् - राज्ञि । कारितं - स्थापितमेव । पश्य - विलोकय ॥

निपु ॥ भट्टिणि! णिव्विआरस्स अधिआरस्स उइदोवदेसो । छा ॥ भट्टिनि! निर्विकार स्याधिकार स्योचितोपदेशः ॥

निपुणिकेति ॥ निपुणिका । वक्ति । भट्टिनि - राज्ञि । निर्विकारस्य - विकाररहितस्य । अधिकारस्य - नियोगस्य । उचितोपदेशः - अर्होपदेशः ॥

इरा ॥ ठाणेक्खु संकिदं मे हिअअं। गिहीदत्था अणंतरं चिंतइस्सम् । छा ॥ स्थानेखलु शंकितं मे हृदयम् । गृहीतार्था अनन्तरं चिन्तयिष्यामि ॥

इरावतीति ॥ इरावती । वक्ति । मे - मम । हृदयम् - मनः । शंकितम् -भयविशिष्टम् । नि ॥ शंकावितर्कभययोरित्यमरः ॥ स्थानेखलु- युक्तमेव । गृहीतार्था - विदितप्रयोजना सती । अहम् । अनन्तरम् - अतःपरम् । चिन्तयिष्यामि - आलोचयिष्यामि ॥

वकुला ॥ दुदिओवि दे संवुत्तपरिकम्मो चळणो । जावणंवि सणेउरं करेमि। नायेन नूपुरयुगळ मामुच्य। हळा उठेहि

अणुचिठ्ठ देवीए असोअस्स विआसत्तिअं णिओअं । छा ॥ द्वितीयोऽपि ते संवृत्त परिकर्मा चरणः । याव देनमपि सनूपुरं करोमि ··· हला उत्तिष्ठानुतिष्ठ देव्या अशोकस्य विकासयितृकं नियोगम् ॥

वकुलावळिकेति ॥ वकुलावळिका । वदति । द्वितीयोऽपि - प्रथमादनन्तरश्च । ते - तव । चरणः - अंघ्रिः । संवृत्तपरिकर्मा - निष्पन्न प्रसाधनः । एनमपि - अमुञ्च । सनूपुरम् - समञ्जीरम् । यावत्करोमि - करिष्यामि । इत्युक्त्वा । नूपुरयुगळम् - मञ्जीरयुग्मं । नाट्येन - अभिनयेन । आमुच्य - आबध्य । प्रवक्ति । हला - सखिमाळविके । उत्तिष्ठ - उद्गच्छ । अशोकस्य - तपनीयाशोकतरोः । विकासयितृकं-विकसनजनकदोहदरूपं । देव्याः - पट्टमहिष्याः । नियोगम् - निर्देशम् । अनुतिष्ठ - समाचर ॥

उभे उत्तिष्ठतः ॥

उभेइति ॥ उभे - द्वे माळविका वकुलावळिकाच । उत्तिष्ठतः - उत्थायगच्छतः ॥

इरा ॥ सुदो देवीए णिओओत्ति । भोदु दाणिं । छा ॥ श्रुतो देव्या नियोगइति । भव त्विदानीं ॥

इरावतीति ॥ इरावती । वक्ति । देव्याः - पट्टमहिष्याः । नियोगः - शासनम् । इति - एवंरूपइति । इदानीं - अद्य । श्रुतः-आकर्णितः । भवतु - अस्तु ॥

वकुला ॥ एसो उवारूढराओ उवभोगक्खमो पुरदो दे

चिठ्ठदि ।छा॥ एष उपारूढराग उपभोगक्षमः पुरतस्ते तिष्ठति॥

---

वकुलावळिकेति॥ वकुलावळिका। वदति। उपारूढरागः - उपारूढः - जातांकुरः। रागः - अनुरागः रक्तिमाचयस्यतथाभूतः। उपभोगक्षमः - यथेष्टभोगार्हः। एषः - अयं। ते - तव। पुरतः - अग्रे। तिष्टति - वर्तते॥

---

माळ॥ सहर्षम्। किं भट्टा ?।छा॥ ... किं भर्ता ?॥

---

माळविकेति॥ माळविका - सहर्षम् - ससंतोषंयथातथा। वक्ति। भर्ता - राजाकिम्॥

---

वकुला॥ सस्मितम्। णदाव भट्टा। एसो असोअसाहाव ळंबी गुच्छओ। ओदंसेहिदाव णं।छा॥ ... नताव द्भर्ता। एषोऽशोकशाखावलम्बी गुच्छकः। अवतंसयताव देनम्॥

---

वकुलावळिकेति॥ वकुलावळिका। सस्मितम् - समन्दहासं यथातथा। वदति। भर्तातावत् - राजातु। न - नभवति। परंतु। एषः - अयंपुरस्थितः। अशोकशाखावलम्बी - तपनीयाशोकशाखालग्नः। गुच्छकः - स्तबकः। तावत् - इदानीं। एनम् - गुच्छकम्। अवतंसय - कर्णाभरणंकुरु॥

---

माळविका विषादं नाटयति॥

---

माळविकेति॥ माळविका। विषादं - तदपचयेन शोभारहित्यंभवतीतिखेदं। नाटयति - अभिनयति॥

---

विदू॥ किं सुदं भवदा।छा॥ किं श्रुतं भवता॥

विदूषकइति ॥ विदूषकः । वक्ति । भवता - त्वया । श्रुतम् - आकर्णितंकिं । माळविकावाक्यमितिशेषः ॥

राजा ॥ सखे ! पर्याप्त मेतावता कामिनाम् ॥

श्लो ॥ अनातुरोत्कण्ठितयोः प्रसिध्यता
समागमेनापि रतिर्न मांप्रति ।
परस्पर प्राप्तिनिराशयो र्वरं
शरीरनाशोऽपि समानुरागयोः ॥५०॥

राजेति ॥ राजा । प्राह । सखे - गौतम । कामिनां- कामुकानाम् । एतावता - एतादृशवाक्यश्रवणेन । पर्याप्तम् - परिपूर्णम् । अभीष्टमितिशेषः । कथमितिचेत् ॥ अनातुरेत्यादि ॥ अनातुरोत्कण्ठितयोः - एकस्यअनातुरस्य । अपरस्यचउत्कण्ठितस्य - अनुरागविशिष्टस्यएतयोः- विषमानुरागयोः कामिनीकामुकयोः । प्रसिध्यता - यथाकथंचित्प्राप्नुवतापि । समागमेन - अन्योन्यसमावेशेन । मांप्रति । नवरम् - ईषत्प्रियमपिनास्ति । किंतु । समानुरागयोः - इतरेतरसमानानुरागविशिष्टयोः तयोः । परस्परप्राप्तिनिराश्रयोः - अन्योन्यसमावेशाशारहितयोस्सतोः । शरीरनाशः - देहवियोगोपि । वरम् - ईषत्प्रियंभवति ॥

माळविका । रचितपल्लवावतंसा सलील मशोकाय पादं प्रहिणोति ॥

माळविकेति ॥ माळविका । रचितपल्लवावतंसा - कृतकिसलयस्तवकरूपकर्णाभरणासती । अशोकाय - तपनीयाशोकवृक्षाय । पादम्- चरणं । सलीलम् - सविलासम् । प्रहिणोति - प्रसारयति ॥ दोहदक्रियायाइतिशेषः ॥

राजा ॥ वयस्य ! ॥

श्रो ॥ आदाय कर्णकिसलय मस्मा दिय मत्र चरण मर्पयति।
उभयो स्सदृशविनिमया दात्मानं वंचितं मन्ये ॥५१॥

---

राजेति ॥ राजा । प्राह । हेवयस्य - सखे । आदायेति ॥ अस्मात् - अशोकवृक्षात् । कर्णकिसलयम् - कर्णभूषणार्थंनवपल्लवम् । आदाय - स्वीकृत्य । अत्र - तपनीयाशोके । इयं - माळविका । चरणं - पादम् । अर्पयति - ददाति । आत्मानम् - मां । उभयोः - कर्णभूषणचरणार्पणयोः । सदृशविनिमयात् - समानपरिवर्तन । वञ्चितं - विप्रलब्धम् - अकृतार्थमित्यर्थः । मन्ये - तर्कयामि ॥

---

माळ ॥ वामोक्खु एसो असोओ जो व्वंजअं पमाणीकदुअ कुसुमुग्गमं णदंसेदि। अपिनाम अम्हाणं सम्भावणा संफळा हवे ? । छा ॥ वामःखलु एषः अशोको यो व्यञ्जकं प्रमाणीकृत्य कुसुमोद्गमं नदर्शयति । अपिना मावयो स्सम्भावना सफला भवेत् ? ॥

---

माळविकेति ॥ माळविका । वदति । एषः - अयं । अशोकः - तपनीयाशोकः । वामः - वक्रःखलु । कुतः । यः - अशोकः । व्यञ्जकम् - पुष्पोद्बोधकदोहदकृत्यं । प्रमाणीकृत्य - हेतुंकृत्वा । कुसुमोद्गमम् - पुष्पोत्पत्तिम् । नदर्शयति - नप्रकाशयति । आवयोः । तवममचेत्यर्थः । सम्भावना - प्रयत्नः । सफला - फलसहिता । अपिनामभवेत् - स्यात्किम् ॥

---

वकुला ॥ हळा णत्थि दे दोसो। अअं जेव्व णिग्गुणो असोओ, जइ कुसुमुग्गममन्थरो हवे, जो दे चळणसक्कारं

ळंभिदो ।छा॥ हला नास्ति ते दोषः। अयमेव निर्गुणोऽशोको, यदि कुसुमोद्गममन्थरो भवेत् यस्ते चरणसत्कारं लंभितः॥

---

वकुलावळिकेति॥ वकुलावळिका। वक्ति। हला - सखि माळविके। ते - तव। दोषः - अपराधः। नास्ति - नविद्यते। किंतु। अयम् - एषः। अशोकः - तपनीयाशोकएव। निर्गुणः - गुणरहितः। यः - अशोकः। ते - तव। चरणसत्कारम् - पादताडरूपबहुमानम्। लम्भितः - प्रापितस्सन्। कुसुमोद्गममन्थरः - पुष्पोद्भेदेमन्दः। भवेद्यदि - स्याच्चेत्। इतिपूर्वेणान्वयः॥

---

राजा॥

श्लो॥ अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन सम्भावितः।
अशोक! यदि सद्यएव मुकुळै र्नसम्पत्स्यसे
मुधा वहसि दोहदं ललितकामिसाधारणम्॥५२॥

सखे! वचनावकाश पूर्वकं प्रवेष्टु मिच्छामि॥

---

राजेत्यादि॥ राजा। प्राह। तनुमध्यया - सूक्ष्मावलग्नया माळविकया। मुखरनूपुराराविणा - शिञ्जानमञ्जीरध्वनियुक्तेन। नवांबुरुहकोमलेन - अभिनवपद्ममृदुलेन। अनेन - अमुना। चरणेन - पादेन। सम्भावितः - सत्कृतः। त्वम्। हेअशोक। सद्यः - तत्कालएव। मुकुळैः - कुड्मलैः। नसम्पत्स्यसेयदि - संयुक्तोनभविष्यसिचेत्। ललितकामिसाधारणम् - चारुकामुकजनतुल्यम्। दोहदं - पादविन्यासरूपक्रियाविशेषं। मुधा - व्यर्थं। वहसि - धारयसि। इत्युक्त्वाविदूषकमाह॥ हे सखे - वयस्य। वचनावकाशपूर्वकम् - वागवसरपुरस्सरं यथातथा। प्रवेष्टुं - तत्समीपंयातुम्। इच्छामि - वाञ्छामि॥

---

विदू ॥ एहि णं परिहासइस्सं । छा ॥ एह्येनां परिहासयिष्यामि ॥

---

विदूषकइति ॥ विदूषकः । ब्रूते । राजन् । एहि- आगच्छ । एनां - मालविकाम् । परिहासयिष्यामि - उपहासंकरिष्यामि ॥

---

उभौप्रवेशं कुरुतः ॥

---

उभाविति ॥ उभौ - राजाविदूषकश्च । प्रवेशंकुरुतः - मालविकासमीपंप्रविष्टौ ॥

---

निपु ॥ भट्टिणि ! भट्टिणि ! भट्टा एत्थ पविसदि । छा ॥ भट्टिनि ! भट्टिनि ! भर्ताऽत्र प्रविशति ॥

---

निपुणिकेति ॥ निपुणिका । वदति । भट्टिनि - राज्ञि । सम्भ्रमाद्द्विरुक्तिः । भर्ता - राजा । अत्र - मालविकासमीपे । प्रविशति - प्राप्नोति ॥

---

इरा ॥ एदं मम पढमं चिंतिदं हिअएण । छा ॥ एतन्मम प्रथमं चिन्तितं हृदयेन ॥

---

इरावतीति ॥ इरावती । वक्ति । एतत्- इदम् । मम । हृदयेन - चित्तेन । प्रथमं - पूर्वमेव । चिन्तितम् - आलोचितम् ॥

---

विदू ॥ उपेत्य । होदि ! जुत्तंणाम अत्तभोदि पिअवअस्से असोओ वामपाएण ताडइदुं ? । छा ॥ ··· भवति ! युक्तं ना मात्रभवति प्रियवयस्ये अशोको वामपादेन ताडयितुम् ? ॥

---

विदूषकइति ॥ विदूषकः । उपेत्य - समीपंप्राप्य । ब्रूते । भवति - माळविके । अत्रभवति - पूज्ये । प्रियवयस्ये - इष्टसुहृदिराज्ञि । स्थितेसतीतिशेषः । अशोकः - तपनीयाशोकपादपः । वामपादेन - सव्यचरणेन । ताडयितुं - प्रहर्तुं । युक्तंनाम - उचितंकिमितिकाकुः ॥

---

उभे ॥ ससम्भ्रमम् । अम्मो भट्टा । जेदु जेदु भट्टा । छा ॥ ... अहह भर्ता । जयतु जयतु भर्ता ॥

---

उभेइति ॥ उभे - माळविकावकुलावळ्यौ । ससम्भ्रमम् - सत्वरंयथातथा । प्राहतुः । अहहभर्ता - आश्चर्यंराजा । भर्ता - राजा । जयतु - सर्वोत्कर्षेणवर्ततां । आदराद्विरुक्तिः ॥

---

विदू ॥ वउळावलिए ! गिहीदत्थाए तुए अत्तभोदी ईरिसं अविणअं करंती कीस ण णिवारिदा । छा ॥ वकुलावळिके ! गृहीतार्थया त्वयाऽत्रभवतीदृश मविनयं कुर्वती कस्मान्न निवारिता ॥

---

विदूषकइति ॥ विदूषकः । वदति । हे वकुलावळिके । गृहीतार्थया - विदितयाथार्थ्यया । त्वया । अत्रभवती - पूज्यामाळविका । ईदृशम् - एतादृशमंघ्रिताडनरूपम् । अविनयं - विनयाभावम् । कुर्वती - विदधतीसती । कस्मात् - कुतः । ननिवारिता - नप्रतिबद्धा ॥

---

माळविका भयं रूपयति ॥

---

माळविकेति ॥ माळविका । भयम् - साध्वसम् । रूपयति -

अभिनयति ॥

---

निपु ॥ भट्टिणि ! पेक्खव किं पउत्तं अज्जगोदमेण । छा ॥ भट्टिनि ! पश्य किं प्रवृत्त मार्यगौतमेन ॥

---

निपुणिकेति ॥ निपुणिका । वक्ति । भट्टिनि - राज्ञि । आर्य गौतमेत - पूज्यगौतमेन । किम्प्रवृत्तम् - कथंवाव्यापृतं । सू ॥ नपुंसकेभावेक्तः । पशय - विलोकय ॥

---

इरा ॥ कहंखु बम्हबंधू अण्णहा जीविस्सदि । छा ॥ कथंखलु ब्रह्मबन्धु रन्यथा जीविष्यति ॥

---

इरावतीति ॥ इरावती । वदति । ब्रह्मबन्धुः - साधारणब्राह्मणोगौतमः । अन्यथा - ईदृशव्यापाराभावे । कथंखलु - केनवाप्रकारेण । जीविष्यति - वृत्तिंकरिष्यति ॥

---

वकुला ॥ अज्ज एसा देवीए णिओअं अणुचिट्ठदि। एदस्सि अदिक्कमे परवदी इअं। पसीददु भट्टा । इत्यात्मना सहैनां प्रणिपातयति । छा ॥ आर्य ! एषा देव्या नियोग मनुतिष्ठति । एतस्मि न्नतिक्रमेपरवतीयं । प्रसीदतु भर्ता ॥ ...

---

वकुलावळिकेति ॥ वकुलावळिका । वदति । हे आर्य - पूज्य गौतम । एषा - इयंमाळविका । देव्याः - पट्टमहिष्याः । नियोगं - शासनं । अनुतिष्ठति - करोति । एतस्मिन् - अस्मिन् । अतिक्रमे - अपराधे । इयं - माळविका - परवती - पराधीना । तस्मात् । भर्ता - राजा । प्रसीदतु - प्रसन्नोभवतु । इति - एवमुक्त्वा । एनां - माळविकां । आत्म

ना - स्वेनसह । प्रणिपातयति - अभिवादयते ॥

---

राजा ॥ यद्येव मनपराद्धासि । उत्तिष्ठभद्रे ; इतिहस्तेन गृहीत्वैना मुत्थापयति ॥

---

राजेति ॥ राजा । प्राह । एवंयदि - तथाभूताचेत् । त्वं । अनपराद्धा - निर्दोषा । असि - भवसि । अतः । हे भद्रे - कल्याणि । उत्तिष्ठ - उद्गच्छ । इति - एवमुक्त्वा । एनां - माळविकां । हस्तेन - करेण । गृहीत्वा - धृत्वा । उत्थापयति - उत्थितांकरोति ॥

---

विदू ॥ जुज्जेदि देवी एत्थमाणइदव्वा । छा ॥ युज्यते देव्यत्र मानयितव्या॥

---

विदूषकइति ॥ विदूषकः । ब्रूते । युज्यते - युक्तमेवैतत् । अत्र - अस्मिन्विषये । देवी - पट्टमहिषी । मानयितव्या - पूजनीया ॥

---

राजा ॥ विहस्य ॥

श्लो ॥ किसलयमृदो र्विलासिनि! कठिने निहितस्यपादपस्कंधे।
चरणस्य न ते बाधा संप्रति वामोरु ! वामस्य ॥८३॥

---

राजेति ॥ राजा । विहस्य - स्मितंकृत्वा । प्राह । विलासिनि - विलासवति । वामोरु - रम्योरुप्रदेशे । नि ॥ वामस्तुवक्रे रम्येस्या दसव्येत्रा म स्थितेपिचे त्यमरः ॥ कठिने - कठोरे । पादपस्कन्धे - तपनीयाशोकवृक्षप्रकाण्डे । निहितस्य - निक्षिप्तस्य । किसलयमृदोः - पल्लवकोमलस्य । वामस्य - दक्षिणेतरस्य । ते - तव । चरणस्य - पादस्य । सम्प्रति - इदानीं । बाधा - व्यथा । न - नविद्यतेकिमितिकाकुः ॥ अत्रप्रसक्त्या संप्रहोनाम सन्ध्यङ्गमुक्तंभवति ॥ अत्राकरग्रन्थे संग्रहस्य लक्षणमुक्तं यथा

न्तराजीये ॥ संग्रहस्सामदानं वा वशीकरणसाधन मिति ॥

माळविका लज्जां नाटयति ॥

माळविकेति ॥ माळविका । लज्जां - व्रीडां । नाटयति - अभिनयति ॥

इरा ॥ अहो णवणीदकप्पहिअओ अज्जउत्तो । छा ॥ अहो नवनीतकल्पहृदय आर्यपुत्रः ॥

इरावतीति ॥ इरावती । वक्ति । आर्यपुत्रः - भर्ता । नवनीतकल्पहृदयः - नवनीतवदतिपेशलस्वान्तः । अहो - आश्चर्यम् । सोल्लुण्ठनवचनमेतदितिज्ञेयम् ॥

माळ ॥ वउळावलिए ! एहि अणुचिट्ठिदं अत्तणोणिओअं देवीए णिवेदम्ह । छा ॥ वकुलावळिके ! एहि अनुष्ठितमात्मनो नियोगं देव्यै निवेदयावः ॥

माळविकेति ॥ माळविका । वदति । हे वकुलावळिके । एहि - आगच्छ । अनुष्ठितम् - कृतम् । आत्मनः - स्वस्य । नियोगम् - आज्ञां । देव्यै - पट्टमहिष्यै । निवेदयावः - विज्ञापयावः ॥

वकुला ॥ विण्णावेहि भट्टारं विसज्जेहित्ति । छा ॥ विज्ञापय भर्तारं विसृजेति ॥

वकुलावळिकेति ॥ वकुलावळिका । वक्ति । सखि । विसृज - त्यज । आवामितिशेषः । इति - एवंप्रकारेण । भर्तारं - राजानंप्रति ।

विज्ञापय - निवेदय ॥

राजा ॥ भद्रे ! यास्यसि । ममताव दुत्पन्नावसर मर्थित्वं श्रूयताम् ॥

राजेति ॥ राजा । प्राह । भद्रे - कल्याणि । यास्यसि - गमिष्यसि । ममतावत् - ममतु । उत्पन्नावसरम् - सञ्जातसमयम् । अर्थित्वं - याचनम् । श्रूयताम् - आकर्ण्यतां । त्वयेत्यध्याहारः ॥

वकुला ॥ अवहिदा सुणाहि । आणवेदु भट्टा । छा ॥ अवहिता शृणु । आज्ञापयतु भर्ता ॥

वकुलावळिकेति ॥ वकुलावळिका । माळविकांप्रत्याह । सखि अवहिता - अप्रमत्तासती । शृणु-आकर्णय । राजनिदेशमितिशेषः । अथराजानम्प्रत्याह । भर्ता - राजा । आज्ञापयतु - निदेशयतु ॥

राजा ॥

श्रो ॥ धृतिपुष्प मयमपि जनो
बध्नाति न तादृशं चिरा त्प्रभृति ।
स्पर्शामृतेन पूरय
दोहद मस्या प्यनन्यरुचेः ॥५४॥

राजेति ॥ राजा । प्राह । अयम् - मादृशः । जनः । चिरात्प्रभृति- चिरकालादारभ्य । तादृशं - तेनतुल्यं । धृतिपुष्पं - धैर्यकुसुममपि । न बध्नाति - नधत्ते । अस्माद्धेतोः । अनन्यरुचेः - इतराभिलाषरहितस्य । अस्य - एतस्यापिजनस्य । दोहदं - मनोरथं । स्पर्शामृतेन - सुधातुल्यसं

स्पर्शेन । पूरय-आप्यायय ॥

---

इरा ॥ सहसोपसृत्य । पूरेहि पूरेहि । असोओ कुसुमं णदं सेदि । अअंखुउण णपुप्फइ फळइज्जेव । छा ॥ ... पूरय पूरय । अशोकः कुसुमं नदर्शयति । अयंखलु पुन र्नपुष्यति फलत्येव ॥

---

इरावतीति ॥ इरावती - राज्ञोद्वितीयपत्नी । सहसा - अतर्कितंयथातथा । उपसृत्य - उपगम्य । वक्ति । माळविके । पूरयपूरय - मनोरथपूर्तिंकुरु । अमर्षवशाद्विरुक्तिः । अशोकः - तपनीयाशोकः । कुसुमम् - पुष्पं । जातावेकवचनम् । नदर्शयति - नावलोकयति । पादताडनरूप स्त्वद्दोहदेनेतिशेषः । अयम्पुनः - एषतु । नपुष्यति - पुष्पंनकरोति खलु । किंतु । फलति - फलंददात्येव ॥

---

सर्वे इरावतींदृष्ट्वा सम्भ्रान्ताः ॥

---

सर्वइति ॥ सर्वे - तत्रत्याराजादयः । सम्भ्रान्ताः - ससाध्वसाजाताः ॥ अत्रसंरम्भवचना त्तोटकंनाम सन्धयङ्गमुक्तंभवति ॥ संरम्भो नाम संभ्रमइतिभावः ॥

---

राजा ॥ अपवार्य । वयस्य ! का प्रतिपत्तिरत्र ? ॥

---

राजेति ॥ राजा -अग्निमित्रः । अपवार्य-त्रिपताकहस्तेनाननमावृत्य । जनान्तिकमित्यर्थः । प्राह । वयस्य - सखे । अत्र - अस्मिन्नवसरे । का प्रतिपत्तिः - कावागतिः ॥ अत्रभीते र्गम्यमानत्वा दुद्वेगोनाम सन्धयङ्गमुक्तंभवति ॥

---

विदू ॥ किं अण्णं ? जंघाबळं एव्व सरणं । छा ॥ किमन्यत् ? जंघाबलमेव शरणम् ॥

---

विदूषकइति ॥ विदूषकः । वदति । राजन् । अन्यत् - इतरत् । किं- किंवावर्तते । जंघाबलम् - प्रसृतासत्त्वमेव। नि ॥ जंघातुप्रसृतेत्यमरः ॥ शरणम् - रक्षकम् ॥

---

इरा ॥ साहु वउळावलिए ! साहु तुए उवक्कंतं दाणिं । करेहि सफळप्पत्थनं अज्जउत्तम् । छा ॥ साधु वकुलावळिके! साधु त्वयोपक्रान्त मिदानीं । कुरु सफलप्रार्थन मार्यपुत्रम् ॥

---

इरावतीति ॥ इरावती । ब्रवीति । वकुलावळिके । साधु - सम्यक् । इदानीं - एतर्हि । त्वया । साधूपक्रान्तम् - सम्यगारब्धम् । आर्यपुत्रं - भर्तारम् । सफलप्रार्थनम् - फलितयाचनम् । कुरु - विधेहि ॥

---

उभे ॥ पसीददु भट्टिणी । काओ वअं भट्टिणो पणअपरिग्गहस्स । इतिनिष्क्रान्ते । छा ॥ प्रसीदतु भट्टिनी । के आवां भर्तुः प्रणयपरिग्रहस्य …॥

---

उभेइति ॥ उभे - माळविकावकुलावळ्यौ । वदतः । भट्टिनी - राज्ञी । प्रसीदतु - प्रसन्नाभवतु । आवाम् । भर्तुः - राज्ञः । प्रणयपरिग्रहस्य - प्रेमपूर्वकस्वीकारस्य । के - कीदृशे । इति - एवमुक्त्वा । निष्क्रांते - निर्गते ॥

---

इरा ॥ अविस्ससणीआ पुरिसा । अत्तणो वंचणवअणं पमाणीकरिअ अहिकिखत्ताए पिअघरिणीए हिअअसल्लं

किदं। एव्वं णविण्णादं मए, वाहजणगीदिगिहीदचित्ताए अविसंकिदाए हरिणीएविअ विणासोत्ति ।छा॥ अविश्वसनीयाः पुरुषाः। आत्मनो वञ्चनवचनं प्रमाणीकृत्याधि क्षिप्तायाः प्रियगृहिण्याः हृदयशल्यङ्कृतम्। एवं नविज्ञातं मया, व्याधजनगीति गृहीतचित्ताया अविशंकिताया हरिण्या इव विनाशइति॥

---

इरावतीति॥ इरावती। वदति। पुरुषाः-पुमांसः। अविश्वसनीयाः-विस्रम्भार्हानभवन्ति। कुतः। आत्मनः-तव। वञ्चनवचनम्-प्रतारणवाक्यम्। प्रमाणीकृत्य-सत्यमितिविश्वस्य। अधिक्षिप्तायाः-वञ्चितायाः। प्रियगृहिण्याः-इष्टपत्न्याः। हृदयशल्यम्-मनश्शल्यम्। कृतं-विहितं। त्वयेतिशेषः। व्याधजनगीतिगृहीतचित्तायाः-लुब्धकजनगानाकृष्टचेतसः। अविशंकितायाः-अभीतायाः। हरिण्याः-मृग्याइव। विनाशः-विपत्तिर्भवतीति। मया। एवम्-इत्थम्। नविज्ञातम्-नविदितम्॥

---

विदू॥ जनान्तिकम्। भो पडिवज्जेहि किंपि उत्तरं। किंणभणइ "उदक्कांदमूळे विमहिळे विमहिदेण कुंभीळेण संधिच्छेदो शिक्खिदव्वोत्ति" वत्तव्वं होइ।छा॥ ··· भो प्रतिपद्यस्व किमप्युत्तरम्। किं नभणति "उदकान्तमूले विपथिके विमथितेन कुम्भीलेन सन्धिच्छेद शिक्षितव्य" इति वक्तव्यं भवति॥

---

विदूषकइति॥ विदूषकः। जनांतिकं-नियतश्राव्यंयथातथा।

ब्रूते । भो - हेराजन् । किमपि - किंवा । उत्तरं - प्रतिवाक्यम् । प्रतिपद्यस्व - प्राप्नुहि । देहीत्यर्थः । उदकान्तमूले - जलसमीपे । विपथिके - शून्यमार्गे । विमथितेन - विमर्दितेन । कुम्भीलेन - चोरेण । सन्धिच्छेदः - सन्धिभेदनव्यापारः । शिक्षितव्यः - अभ्यसनीयः । एवं । किंनभणाति - नवदतिवा । चोरइतिशेषः । इति - एवंप्रकारेण । वक्तव्यम् - किञ्चित्कथनीयं । भवति - वर्तते ॥

---

राजा ॥ सुन्दरि ! न मे माळविकया कश्चिदर्थः । मया त्वं चिरयसीति यथाकथंचि दात्मा विनोदितः ॥

---

राजेति ॥ राजा । प्राह । सुन्दरि - लावण्यवति । माळविकया - एतदाख्यया बालिकया । कश्चिदर्थः - किञ्चित्प्रयोजनमपि । मे - मम । न - नविद्यते । किंतु । त्वं । चिरयसि - दीर्घयसि । इति - अस्माद्धेतोः । यथाकथंचित् - येनकेनवोपायेन । मया । आत्मा - मनः । विनोदितः - सन्तोषितः ॥

---

इरा ॥ अविस्ससणीओसि । ण मए विण्णादं ईरिसं विणोदवुत्तंतं अज्जउत्तेण उवळद्धंति । अण्णहा दुक्खव्वावारिणी एव्वं णकरेमि । छा ॥ अविश्वसनीयोऽसि । न मयाविज्ञातमीदृशो विनोदवृत्तान्त आर्यपुत्रे णोपलब्धइति । अन्यथा दुःखव्यापारि ण्येवं न करोमि ॥

---

इरावतीति ॥ इरावती । शंसति । राजन् । त्वं । अविश्वसनीयोऽसि - विश्वासार्होनभवसि । कुतः - आर्यपुत्रेण - भर्त्रात्वया । ईदृशः - एतादृशः । विनोदवृत्तान्तः - हर्षप्रकारः । नि ॥ वृत्तान्तस्स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोरित्यमरः ॥ उपलब्धः - सम्प्राप्तइति । मया । नवि

ज्ञातं - नविदितं । अन्यथा - तथानचेत् । दुःखव्यापारिणी - दुःखोद्यो गिनीसती । एवम् - अनेनप्रकारेण । नकरोमि - नकुर्वे ॥

---

विदू ॥ मादाव अत्तभोदो दक्खिण्णस्स उवरोहं करे हि समीवदिठ्ठेण देवीए परिचारिइत्थिआअणेण संकहावि ज इवारीअदि एत्थ तुमंएव्व पमाणं । छा ॥ मातावत्तत्रभवतो दा क्षिण्यस्योपरोधं कुरु समीपदृष्टेन देव्याः परिचारिस्त्री जनेन संकथापि यदिवार्येत अत्र त्वमेव प्रमाणम् ॥

---

विदूषकइति ॥ विदूषकः । प्राह । हेराज्ञि । तावत् - इदानीं । तत्रभवतः-पूज्यस्यमहाराजस्य। दाक्षिण्यस्य - नायिकासंघविषयेतौल्यस्य। उपरोधम् - प्रतिबन्धम् । माकुरु - नरचय । समीपदृष्टेन - आसन्नवीक्षि तेन । देव्याः - पट्टमहिष्याधारिण्याः । परिचारिस्त्रीजनेन - भृत्यवनिता जनेन । संकथा - सल्लापोऽपि । यदिवार्येत - निरुधयेतचेत् । अत्र - अ स्मिन्नर्थे । त्वमेव । प्रमाणम् -निदर्शनम् ॥ इयंमाळविकापि भृत्यवनितापर्य वसानेन सल्लापार्हे वेतिभावः ॥

---

इरा ॥ णं संकहाणाम होदु किंति अत्ताणं आआसइ स्सं इति रुष्टा प्रस्थिता । छा ॥ ननु संकथानाम भवतु किमि त्यात्मान मायासयिष्यामि ॥

---

इरावतीति ॥ इरावती । वदति । ननु - हे गौतम । संकथा नाम - सल्लापमात्रम् । भवतु - अस्तु । अनयोरितिशेषः । आत्मानम् - मां । किमिति - किमर्थम् । आयासयिष्यामि - क्लिष्टंप्रापयिष्यामि । इति - एवमुक्त्वा । रुष्टा - रोषयुक्तासती । प्रस्थिता - निर्गता ॥

---

राजा ॥ अनुसरन्। प्रसीदतु भवती ॥

---

राजेति ॥ राजा। अनुसरन्- अनुगच्छन्। इरावतीमितिशेषः। प्राह। किमिति। भवती। प्रसीदतु- प्रसन्नाभवतु॥

---

इरावती रशनासंदानित चरणा व्रजत्येव ॥

---

इरावतीति॥ इरावती। रशनासंदानितचरणा- अमर्षवशाल्लम्बितकाञ्चीबद्धपादासती। व्रजति- गच्छत्येव॥

---

राजा॥ सुन्दरि! नशोभते प्रणयिजने निरपेक्षता॥

---

राजेति॥ राजा। प्राह। हेसुन्दरि- लावण्यवति। प्रणयिजने- प्रियजनेविषये। निरपेक्षता- अपेक्षाभावः। नशोभते- नविराजते॥

---

इरा॥ सठ! अविस्ससणीओसि। छा॥ शठ! अविश्वसनीयोऽसि॥

---

इरावतीति॥ इरावती। वक्ति। शठ- हे वैषम्यप्रधान। अविश्वसनीयः- विश्वासानर्हः। असि- भवसि॥

---

राजा॥

श्लो॥ शठइति मयितावदस्तु ते
परिचयवत्यवधीरणा प्रिये!।
चरणपतितया न चण्डितां
विसृजसि मेखलयापि याचिता॥५५॥

---

राजेत्यादि ॥ राजा । प्राह । हेप्रिये - प्रेयसि । परिचयवति - संस्तववति । नि ॥ संस्तवस्स्यात्परिचय इत्यमरः ॥ मयितावत् - मयितु । शठः - गूढविप्रियकारीति । अवधीरणा - तिरस्कारः । ते - तव । अस्तु - भवतु । अतिपरिचयादवज्ञेतिन्यायेन युक्तैवेत्यर्थः । हे चण्डि - अत्यं तामर्षशीले । चरणपतितया - पादपतितया । मेखलया - काञ्च्या । याचिता - प्रार्थितापि । ताम् - अवधीरणाम् । नविसृजसि - नत्यजसि ॥ इदन्तुनोचितमितिभावः ॥

---

इरा ॥ **इअंपि हदासा तुमंएव्व अणुसरदि** । इतिरशनामादाय राजानं ताडयितु मिच्छति । छा ॥ **इयमपि हताशा त्वामेवानुसरति** ... ॥

---

इरावतीति ॥ इरावती । वदति । आर्यपुत्र । हताशा - अपहताशा । इयं - रशनापि । त्वां - भवंतमेव । अनुसरति - अनुवर्तते । इति - एवमुक्त्वा । रशनां - मेखलां । आदाय - गृहीत्वा । राजानम् - भर्तारम् । ताडयितुम् - प्रहर्तुम् । इच्छति - वाञ्छति ॥

---

राजा ॥ **वयस्य ! एषेरावती** ॥

श्लो ॥ **बाष्पासारा हेमकाञ्चीगुणेन**
**श्रोणीबिम्बादप्युपेक्षाच्युतेन ।**
**चण्डी चण्डं हन्तु मभ्युद्यता मां**
**विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥५६॥**

---

राजेत्यादि ॥ राजा । प्राह । हे वयस्य - सखे । बाष्पासारा- बाष्पः - नेत्रजलम् । आसारः - धारासम्पातो यस्या स्तथाभूता । श्रोणी

बिम्बात् - नितम्बमण्डलात् । उपेक्षाच्युतेन - अनादरगळितेनापि । विद्यु द्दाम्ना - तटिन्मालयेव । हेमकाञ्चीगुणेन - सुवर्णमेखलया । चण्डं - कुपितंयथातथा । मेघराजी - जलधरमालेव । एषा - इयम् । चण्डी - कोपना । इरावती - एतन्नामिकाराज्ञी । विन्ध्यम् -एतन्नामानमचलमिव । मां । हन्तुं - ताडयितुम् । अभ्युद्यता - उद्युक्ता । इदानीमितिशेषः ॥

---

इरा॥ किं एव्वं भूओवि मं अवधीरिअं करेसि । छा ॥ किमेवं भूयोऽपि मामवधीरितां करोषि ॥

---

इरावतीति ॥ इरावती । वक्ति । एवम् - अनेनप्रकारेण । भूयः - पुनरपि । मां । अवधीरितां - तिरस्कृतां । किंकरोषि - किमर्थंकृतवानसि ॥

---

राजा॥ सरशनं हस्त मवलम्बयति ॥

श्लो॥ अपराधिनि मयि दण्डं संहरसि समुद्यतं कुटिलकेशि ।
वर्धयसि विलसितं त्वं दासजना यात्र कुप्यसिच ॥५७

नून मिदानी मनुज्ञातम् । इतिपादयोः पतति ॥

---

राजेत्यादि ॥ राजा । सरशनं - काञ्चीसहितं । हस्तम् - करम् । अवलम्बयति - गृह्णाति । गृहीत्वाप्राह । कुटिलकेशि - वक्रालके । अपराधिनि - आगस्कारिणिमयि । समुद्यतम् - उद्यमसहितम् । दण्डं - शिक्षणम् । संहरसि - निवर्तयसि । अतः । विलसितम् - विलासम् । त्वं । वर्धयसि - वृद्धिंकरोषि । अत्र - इदानीम् । दासजनाय - भृत्यजनाय मह्यम् । कुप्यसि - अमर्षंकरोषिच ॥ इदानीं - अद्य । अनुज्ञातम् - अनुमतम् । रशनासंहरणमितिशेषः । नूनं - निश्चयः । इति - एवमुक्त्वा ।

पादयोः - चरणयोः । पतति - व्रजति ॥

---

इरा ॥ णक्खु इमे माळविआए चळणा जे दे विसेसे ण दोहळं पूरयिस्संति । इतिनिष्क्रान्तासचेटी । छा ॥ नखल्विमौ माळविकाया श्चरणौ यौ ते विशेषेण दोहदं पूरयिष्यतः ॥

---

इरावतीति ॥ इरावती । वक्ति । इमौ - एतौ । माळविकायाः - एतन्नामिकाया स्तवप्रियायाबालिकायाः । चरणौ - पादौ । नखलु - नभवतोहि । यौ - माळविकापादौ । ते - तव । दोहदं - हर्षं । विशेषेण - आधिक्येन । पूरयिष्यतः - वर्धयिष्यतः । इति - इत्थमुक्त्वा । सचेटी - चेटीसहितासती । निष्क्रान्ता - निर्गता ॥

---

विदू ॥ उठ्ठेहि आकिदप्पसादोसि । छा ॥ उत्ति ष्ठाकृतप्रसादोऽसि ॥

---

विदूषकइति ॥ विदूषकः । ब्रवीति । राजन् । उत्तिष्ठ - उद्गच्छ । अकृतप्रसादः - अविहितानुग्रहः । इरावत्येतिशेषः । असि - भवसि ॥

---

राजा ॥ उत्था येरावती मपश्यन् । त त्कथं गतैव प्रिया ? ॥

---

राजेति ॥ राजा । अग्निमित्रः । उत्थाय - उद्गत्य । इरावतीम् - एतन्नामकराज्ञीम् । अपश्यन् - अविलोकयन् । प्राह । सखे ! तत् - तर्हि । प्रिया - प्रेयसी । गतैवकथम् - यातैवकिम् ॥

---

विदू ॥ वअस्स ! देव्वेहि इमस्स अविणअस्स अपसारइदा । अहं सिग्घं अपक्कमाम जाव अङ्गारकरासिंविअ अणुच

क्कं णकरेदि । छा ॥ वयस्य ! दैवैः अस्य अविनयस्य अपसारिता । अहं शीघ्रं अपक्रमामि यावत् अङ्गारराशिमिव अनुचक्रं नकरोति ॥

---

विदूषकइति ॥ विदूषकः । वदति । हेवयस्य - सखे । दैवैः - भाग्यविशेषैः । अपसारिता - अपक्रान्ता । अस्य - एतयाकृतस्य । अविनयस्य - अविधेयत्वस्य । अहं । शीघ्रम् - सत्वरम् । अपक्रमामि - अपसरामि । यावत् - यावताकालेन । अनुचक्रम् - चक्रवत् । अङ्गारराशिमिव - अङ्गारसमूहमिव । नकरोति - नविदधाति । मामितिशेषः ॥

---

राजा ॥ अहो मदनस्य वैषम्यम् ॥

श्लो ॥ मन्ये प्रियाहृतमना स्तस्याः
प्रणिपातलंघनं सेवाम् ।
एवं प्रणयवती सा
नहिशक्य मुपेक्षितुं कुपिता ॥५८॥

त देहि कुपितां देवीं प्रसादयावः ॥

---

राजेत्यादि ॥ राजा । प्राह । मदनस्य - मन्मथस्य । वैषम्यम् - शाठ्यम् । अहो - किमाश्चर्यं । प्रियाहृतमनाः - प्रेयस्याकृष्टचित्तः । अहम् । सेवां - परिचर्यां । तस्याः - इरावत्याः । प्रणिपातलंघनं - प्रणामातिक्रमणम् । नमन्ये - नतर्कयामिहि । प्रणयवती - प्रेमयुक्ता । सा - राज्ञी । एवम् - अनेनप्रकारेण । कुपिता - क्रोधयुक्तासती । उपेक्षितुम् - अनादरंकर्तुं । नशक्यंहि - नशक्यैव ॥ तत् - तस्मात्कारणात् । कुपितां - रोषयुक्तां । देवीं - राज्ञीं । प्रसादयावः - प्रसन्नांकुर्वः । एहि - आगच्छ ॥ अत्रबीजानुसन्धाना दाक्षेपोनाम सन्धयङ्गमुक्तंभवति । इद मनुसन्धानमे

व उत्तरांक कथोपयोगित्वा द्विन्दुरित्यनुसन्धेयम् ॥

---

इति निष्क्रान्तास्सर्वे ॥

---

इतीति ॥ इति - एवमुक्त्वा । सर्वे - राजादयः । निष्क्रान्ताः- निर्गताः ॥

---

इ ति तृ ती यो ऽ कः .

इति श्रीमन्मृत्युञ्जय निश्शंकक्षोणीपाल विरचिते मा ळविकाग्निमित्रव्याख्याने विबुधरञ्जनीसमाख्याने तृतीयोऽकः .

श्रीरस्तु·

# मालविकाग्निमित्रम्.

## चतुर्थोऽङ्कः

ततः प्रविशति पर्युत्सुको राजा प्रतिहारीच ॥

---

कविरिदानी मङ्कान्तरमारभते । ततःप्रविशतीत्यादि॥ ततः- अनन्तरम् । पर्युत्सुकः- विरहोत्कण्ठितः । राजा - अग्निमित्रोनामनृपः। प्रतिहारी - द्वारपालिकाच । प्रविशति - रङ्गस्थलम्प्राप्नोति ॥

---

राजा ॥ आत्मगतम् ॥

श्लो ॥ ता माश्रित्य श्रुतिपथगता माशया बद्धमूल
स्संप्राप्तायां नयनविषयं रूढरागप्रवाळः ।
हस्तस्पर्शैः कुसुमितइव व्यक्तरोमोद्गमत्वा
त्कुर्या त्कान्तं मनसिजतरु र्मां रसज्ञं फलस्य ॥५९॥

प्रकाशम् । सखे ! गौतम ! ॥

---

राजेत्यादि ॥ राजा । आत्मगतम् - स्वगतम् । प्राह । मनसिजतरुः - मन्मथवृक्षः । श्रुतिपथगताम् - श्रोत्रमार्गप्राप्तां । तां - मालविकाम् । आश्रित्य - अवलम्ब्य । आशया - तृष्णया । नि ॥ आशादिगतितृष्णयो रितिविश्वः ॥ बद्धमूलः - रूढमूलः । नयनविषयं - लोचनगोचरत्वं। सम्प्राप्तायाम् - समागतायांसत्यां । रूढरागप्रवाळः - निरूढारुणिमकिसलयः । अभूदितिशेषः । हस्तस्पर्शैः - करस्पर्शनैः । व्यक्तरोमोद्गमत्वात् -

स्पष्टरोमाञ्चत्वाद्धेतोः। कुसुमितः - पुष्पितइवस्थितः। इदानीं। कान्तं - प्रियम्। मां। फलस्यरसज्ञम् - माधुर्यरसवेदिनं। कुर्यात् - विदध्यात्॥ प्रकाशं - सर्वश्राव्यं। प्राह। सखे - प्रिय। गौतम - एतन्नामकविदूषक। कुत्रवर्तसेइतिशेषः॥

---

प्रतीहारी॥ जेदुजेदु भट्टा। असण्णिहिदो गोदमो। छा॥ जयतुजयतु भर्ता। असन्निहितो गौतमः॥

---

प्रतीहारीति॥ प्रतीहारी। विज्ञापयति। भर्ता - राजा। जयतु जयतु - सर्वोत्कर्षेणवर्तताम्। आदराद्विरुक्तिः। गौतमः - एतन्नामकोविदूषकः। असन्निहितः - असन्निकृष्टः॥

---

राजा॥ आत्मगतम्। आः! माळविका वृत्तान्तज्ञानाय मया प्रेषितः॥

---

राजेति॥ राजा। आत्मगतम् - स्वगतम्। प्राह। आः - हे प्रतिहारि। मया। माळविकावृत्तान्तज्ञानाय - माळविकोदन्तबोधनाय। प्रेषितः - प्रहितः। गौतमइतिशेषः॥

---

प्रविश्यविदूषकः॥ जेदुजेदु भवं। ... छा॥ जयतु जयतु भवान्॥

---

प्रविश्येति॥ विदूषकः। प्रविश्य - राजनिकटंप्राप्य। वक्ति। भवान्। जयतु जयतु - सर्वोत्कर्षेणवर्तताम्। आदराद्विरुक्तिः॥

---

राजा॥ जयसेने! जानीहितावत्क्वासौ देवी धारिणी

सरुज चरणत्वा द्विनोद्यतइति ॥

---

राजेति ॥ राजा । प्राह । जयसेने - एतदभिख्येप्रतिहारि । तावत् - इदानीं । असौ - एषा । धारिणी - एतदाख्या । देवी - पट्टमहिषी । सरुजचरणत्वात् - व्याधियुक्तपादत्वाद्धेतोः । क्व - कुत्र । विनोद्यते - कालयापनां कार्यते । इति - एवं । जानीहि - विद्धि ॥

---

प्रती ॥ जं देवो आणवेदि ॥ इतिनिष्क्रान्ता । छा ॥ य देव आज्ञापयति ··· ॥

---

प्रतीहारीति ॥ प्रतीहारी । वक्ति । देवः - राजा । यदाज्ञापयति - यन्नियुंक्ते । तत्करोमीतिवाक्यशेषः । इति - एवमुक्त्वा । निष्क्रान्ता - निर्गता ॥

---

राजा ॥ गौतम ! को वृत्तान्त स्तत्रभवत्या स्ते सख्याः ॥

---

राजेति ॥ राजा । प्राह । हे गौतम । तत्रभवत्याः - पूज्यायाः । ते - तव । सख्याः - मित्रभूतायामाळविकायाः । वृत्तान्तः - वार्ता । कः - कीदृशः । वेदत्यधयाहारः ॥

---

विदू ॥ जो विडाळगहीदाए परहुदिआए । छा ॥ यो बिडालगृहीतायाः परभृतिकायाः ॥

---

विदूषकइति ॥ विदूषकः । कथयति । राजन् । बिडालगृहीतायाः - मार्जालाक्रान्तायाः । परभृतिकायाः - पिकशावायाः । यः - वृत्तांतः । सएववृत्तान्तो माळविकाया इत्यर्था लभ्यते ॥

राजा ॥ सविषादम् । कथमिव ॥

राजेति ॥ राजा । सविषादं - मनःक्लेशसहितंयथातथा । प्राह । कथमिव - केनवाप्रकारेण । तादृशीअवस्थाप्राप्तेत्यर्थः ॥

विदू ॥ साक्खुतवस्सिणी ताए पिंगलक्खीए सारभंडगेहे मुहे परिक्खित्ता । छा ॥ साखलु तपस्विनी तया पिङ्गळाक्ष्या सारभाण्डगेहमुखे परिक्षिप्ता ॥

विदूषकइति ॥ विदूषकः । वक्ति । सा - प्रसिद्धा । तपस्विनी - दीनामाळविका । पिङ्गळाक्षया - पिङ्गळवर्णनेत्रया । तया - देव्या । सारभाण्डगेहमुखे - सारभाण्डस्य - प्रधानधनादेः । गेहम् - स्थितियोग्य भवनम् । पाताळगृहमित्यर्थः । तस्यमुखे - द्वारे । परिक्षिप्ता - निहिता खलु ॥

राजा ॥ ननु मत्सम्पर्क मुपलभ्य ॥

राजेति ॥ राजा । प्राह । ननु - विदूषक । मत्सम्पर्कं - मया सम्बन्धम् । उपलभ्य - ज्ञात्वा । तयासातथाकृता किमित्यर्थो लभ्यते ॥

विदू ॥ अहइं । छा ॥ अथकिम् ॥

विदूषकइति ॥ विदूषकः । वदति । हेराजन् । अथकिम् - तथैवेत्यर्थः ॥

राजा ॥ क एवं विमुखोऽस्माकं येन चण्डीकृता देवी ॥

राजेति ॥ राजा । प्राह । एवम् - अनेनप्रकारेण । अस्माकं । विमुखः - प्रतिकूलकारी । कः । येन - जनेन । देवी - राज्ञी । चण्डी - क्रोधयुक्ता । कृता - विहिता ॥

---

विदू ॥ सुणादु भवं । परिव्वाजिआ मे कहेदि । भो हिओकिळ तत्तभोदी इरावदी रुजाअंतचळणां देवीं सुहं पुच्छिदुं आअदा । छा ॥ शृणोतु भवान् । परिव्राजिका मे कथयति । भो ह्यःकिल तत्रभव तीरावती रुजाक्रान्तचरणां देवीं सुखं प्रष्टु मागता ॥

---

विदूषकइति ॥ विदूषकः । ब्रवीति । राजन् । भवान् । शृणोतु - आकर्णयतु । परिव्राजिका - पण्डितकौशिकी । मे - मह्यम् । कथयति - वदति । किमिति । भो - गौतम । तत्रभवती - पूज्या । इरावती - एतन्नाम्नीदेवी । ह्यः - पूर्वेद्युःकिल । रुजाक्रान्तचरणाम् - व्यथासहितपादां । देवीम् - पट्टमहिषीम् । सुखम् - सौख्यम् । प्रष्टुम् - अनुयोक्तुम् - आगता - आयाता ॥

---

राजा ॥ तत स्ततः ॥

---

राजेति ॥ राजा । प्राह । ततस्ततः - अनन्तरंकिंजातम् । आदराद्विरुक्तिः ॥

---

विदू ॥ तदो सा देवीए पुच्छिदा । किं अत्तणोवि अणळंकिदो हिअअजणो वळ्ळहोत्ति । तदो ताए उत्तम्मंतीए मंतिदं । कुदोवा उवआरो जं परिअणे संकंतं वळ्ळहत्तणं

जाणिस्सदित्ति। छा ॥ तत स्तया देव्या पृष्टा। किं माल्लनोऽप्यनलंकृतो हृदयजनो वल्लभइति। तत स्तया घोत्ताम्यन्त्या मन्त्रितम्। कुतो वोपचारो य त्परिजने संक्रान्तं वल्लभत्वं ज्ञास्यतीति ॥

---

विदूषकइति ॥ विदूषकः। वदति। ततः - अनन्तरम्। देव्या - पट्टमहिष्या। सा - इरावती। पृष्टा - पृच्छ्यतेस्म। हृदयजनः - चेतःप्रियजनः। अनलंकृतोऽपि - अभूषितोऽपि। आत्मनः - स्वस्य। वल्लभः किम् - प्रियोहि। किमुतालंकृतइतिभावः। तस्मात्किंनालंकृतासीतिप्रश्नाशयः। इति - एवं। पृष्टेतिपूर्वेणानुषङ्गः। ततः - अनन्तरम्। उत्ताम्यन्त्या - क्लिशयन्त्या। तया - इरावत्या। मन्त्रितं रहसिकथितम्। किमिति। उपचारः - भूषणाद्युपचारः। कुतः - कथंवाभवति। यत् - यस्मात्कारणात्। परिजने- परिचारकजने। संक्रान्तम् - अधिष्ठितम्। वल्लभत्वं। ज्ञास्यति - ज्ञातंभविष्यतीति ॥

---

राजा ॥ अहो निर्वेदादृते माळविकाया मय मुपन्यास श्शंकयति ॥

---

राजेति ॥ राजा। प्राह। निर्वेदादृते - हर्षंविना। अयम् - इरावतीकृतः। उपन्यासः - वागारम्भः। माळविकायां - माळविकाविषये। शंकयति - संशयमुत्पादयति। अहो - चित्रम् ॥

---

विदू ॥ तदो ताए अणुवन्धिज्जमाणाए भवदो अविणअं अन्तरेण परिगदत्था किदा। छा ॥ तत स्तया ऽनुबध्यमानया भव तोऽविनयमन्तरेण परिगतार्था कृता ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । ततः - अनन्तरम् । तया - पट्टमहिष्या । अनुबध्यमानया - पृच्छ्यमानया । इरावत्येतिशेषः । भवतः - तव । अपिनयमन्तरेण - स्वधार्ष्ट्यंविना । परिगतार्था - ज्ञातार्था । कृता - विहिता ॥

---

राजा ॥ अहो दीर्घरोषता तत्रभवत्याः । अतःपरं कथय ॥

---

राजेति ॥ राजा । प्राह । तत्रभवत्याः - पूज्यायाइरावत्याः । दीर्घरोषता - दीर्घक्रोधता । अहो - आश्चर्यकरी । अतःपरम् - अस्मादनन्तरम् । कथय - वद ॥

---

विदू ॥ किं अवरं । मालविआ बउळावलिआअ णिगळपदीओ अदिट्ठसुज्जपाआ पाआलवासं णागकण्णआविअ अणुहवंति । छा ॥ किं मपरम् । मालविका वकुलावळिका च निगळपद्या वदृष्टसूर्यपादे पाताळवासं नागकन्यकेइवानुभवतः ॥

---

विदूषकइति ॥ विदूषकः । कथयति । हे राजन् । अपरम् - अन्यत् ॥ किं - किंवावर्तते । मालविका । वकुलावळिका - एतन्नामीतत्सहचरीच । निगळपद्यौ - सपादबन्धनेसत्यौ । अदृष्टसूर्यपादे - रविमयूखप्रसाररहितेचसत्यौ । नागकन्यके - नागाङ्गने । पाताळवासम् - रसातलनिवासमिव । अनुभवतः - भुञ्जाते ॥

---

राजा ॥ कष्टं कष्टम् ॥

श्लो ॥ मधुरस्वरा परभृता भ्रमरीच विबुद्धचूतसंगिन्यौ ।
कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते ॥ ६० ॥

अ प्यत्र कस्यांचि दुपक्रमस्य गति स्स्यात् ॥

राजेति ॥ राजा। प्राह। कष्टकष्टम् - अतीवकष्टं । समुपस्थितमितिशेषः। मधुरेत्यादि॥ मधुरस्वरा - श्राव्यस्वना। परभृता - कोकिला। भ्रमरी - षट्पदीच। तत्तुल्येमालविकावकुलावळिकेइतिध्वनिः। विबुद्धचूतसङ्गिन्यौ - विकसितरसालसंबन्धिन्यौसत्यौ। मदाश्रितेइति ध्वन्यते। प्रबलपुरोवातया - प्रचण्डपूर्वदिग्वायुमत्या। अकालवृष्ट्या - असमयवर्षेण। कोटरं - तरुकोटरं। गाढान्धकारमितिव्यज्यते। गमिते - प्रापिते॥ गौतम। अत्र - अस्मिन्विषये। कस्यचित् - यस्यकस्यवा। उपक्रमस्य - आरम्भस्य। गतिः - अवकाशः। स्यादपि - भवेत्किम्॥

विदू॥ कहं भविस्सदि। जं सारभाण्डगिहव्वावारिदा माहविआ देवीए संदिट्टा। मह अंगुलीअमुद्दिअं अदेक्खिअ णमोत्तवा तुए हदासा मालविआ वउळावलिआचेत्ति। छ॥ कथं भविष्यति। यत्सारभाण्डगृहव्यापारिता माधविका देव्या संदिष्टा। म मांगुळीयमुद्रिका मदृष्ट्वा नमोक्तव्या त्वया हताशा माळविका वकुलावळिकाचेति॥

विदूषकइति॥ विदूषकः। राजन्। कथम् - केनवाप्रकारेण। भविष्यति सम्पत्स्यते। यत् - यस्मात्। सारभाण्डगृहव्यापारिता - ससारकोशनिक्षेपार्हनिकेतनाधिकृता। माधविका - एतदाख्यायोषित्। देव्या - पट्टमहिष्या। संदिष्टा - वाचिकंप्रेषिता। किमिति। मम। अंगुळीयमुद्रिकां - करशाखोर्मिकाम्। अदृष्ट्वा - अविलोक्य। त्वया। हताशा - नष्टतृष्णा। माळविका। वकुलावळिकाच। नमोक्तव्या - नत्यक्तव्या। इति - एवंप्रकारेण। सन्दिष्टेतिपूर्वेणान्वयः॥

राजा ॥ निश्श्वस्य सपरामर्शम् । सखे ! किमत्र कर्तव्यं ॥

---

राजेति ॥ राजा । निश्श्वस्य - दीर्घश्वासंकृत्वा । सपरामर्शं - पूर्ववृत्तान्तानुकर्षणसहितंयथातथा । प्राह । सखे - गौतम । अत्र - अस्मिन्विषये । किंकर्तव्यम् - किंवाविधेयम् ॥

---

विदू ॥ विचिन्त्य । अत्थि एत्थ उवाओ । छा ॥ … अस्त्यत्रोपायः ॥

---

विदूषकइति ॥ विदूषकः । विचिन्त्य - पर्यालोच्य । वक्ति । अत्र - एतस्मिन्कार्ये । उपायः -साधनांतरम् । अस्ति - विद्यते ॥

---

राजा ॥ कइव ॥

---

राजेति ॥ राजा । प्राह । कइव - कोवाउपायोभवेत् ॥

---

विदू ॥ सदृष्टिक्षेपम् । कोवि अदिट्ठो सुणिस्सदि । कण्णे दे कहेमि । इत्युपश्लिष्य । एव्वंविअ । इत्यावेदयति । छा ॥ … कोऽप्यदृष्ट श्शृणोति । कर्णे ते कथयामि … एवमिव ॥

---

विदूषकइति ॥ विदूषकः । सदृष्टिक्षेपम् - पार्श्वयोस्सनेत्रप्रसारं यथातथा । वदति । राजन् । कोऽपि - कश्चन । अदृष्टः - अनवलोकितस्सन् । शृणोति - आकर्णयेत् । तस्मात् । ते - तव । कर्णे - श्रोत्रे । कथयामि - वदामि । इति - एवमुक्त्वा । उपश्लिष्य - कर्णसमीपमेत्य । एवमिव - अनेनप्रकारेण । ऊहितवानस्मीतिशेषः । इति - इत्थं । आवेदयति - निवेदयति ॥ अत्रराज्ञः कर्णे विदूषकोक्तउपायोनियमेन माळविकाप्राप्तिहेतुत्वा न्नियताप्तिर्नाम चतुर्थ्यवस्थासूचिता । अत्रपूर्वं प्रकरीस्थानोक्तवी

जस्य अनयानियतानया समन्वया द्वमर्शोनामसन्धिः प्रतिपादितइति वेदितव्यम् ॥

---

राजा ॥ सहर्षम्। अनुष्ठेयं प्रयुज्यतां सिद्धये ॥

---

राजेति ॥ राजा । सहर्षम् - सतोषंयथातथा । प्राह । सखे । सिद्धये - कार्यनिरूढये । अनुष्ठेयम् - यत्कर्तव्यं । तत्प्रयुज्यताम् - क्रियतां । त्वयेतिशेषः॥

---

ततः प्रविशति प्रतिहारी ॥

---

ततइति ॥ ततः - अनन्तरम् । प्रतिहारी-जयसेनाख्यादौवारिकी। प्रविशति - राजसमीपेप्राप्नोति ॥

---

प्रतिहारी ॥ देव ! पवादसअणे देवी णिसण्णा रत्तचंदन वारिणा परिअण हत्थगदेण चंदणेण भअवदीए विणोदीअमाणा कहाहिं चिठ्ठदि। छा ॥ देव ! प्रवातशयने देवी निषण्णा रक्तचन्दनवारिणा परिजनहस्तगतेन चन्दनेन भगवत्या विनोद्यमाना कथाभि स्तिष्ठति ॥

---

प्रतिहारीति ॥ प्रतिहारी । वक्ति । देव - राजन् । देवी - पट्टमहिषी । परिजनहस्तगतेन - परिचारिकाकरधृतेन । रक्तचन्दनवारिणा - रक्तचन्दनोदकेन । चन्दनेन - मलयजेनचसह । भगवत्या - पूज्यया परिव्राजिकया । कथाभिः - विनोदवृत्तान्तकथनैः । विनोद्यमाना - रज्यमानासती । प्रवातशयने - प्रशस्तमन्दमारुतशय्यायाम् । निषण्णा - उपविष्टा । तिष्ठति - वर्तते ॥

---

राजा ॥ तस्मा दस्मत्प्रयाणयोग्योऽय मवसरः ॥

---

राजेति ॥ राजा । प्राह । तस्मात् - ततोहेतोः । अयमवसरः - एषसमयः । अस्मत्प्रयाणयोग्यः - अस्माकङ्गमनोचितः ॥

---

विदू ॥ भो गच्छदु भवं । अहंपि देविं पेक्खिदुं अरित्त पाणी हुविस्सं । छा ॥ भो गच्छतु भवान् । अहमपि देवीं प्रेक्षितु मरिक्तपाणि र्भविष्यामि ॥

---

विदूषकइति ॥ विदूषकः । ब्रवीति । भो - राजन् । भवान् । गच्छतु - व्रजतु । अहमपि । देवीम् - पट्टमहिषीम् । प्रेक्षितुं - विलोकयितुम् । अरिक्तपाणिः - अशून्यहस्तः । भविष्यामि - सम्पत्स्ये ॥

---

राजा ॥ जयसेनाया स्ताव त्संविदितं गच्छ ॥

---

राजेति ॥ राजा । प्राह । सखे । तावत् - इदानीं । जयसेनायाः - एतदाख्यायाः प्रतिहार्याः । संविदितं - सम्यग्ज्ञातं यथाभवतितथा । गच्छ - याहि ॥

---

विदू ॥ तह । कर्णे । एव्वंविअ होदि । इतिनिष्क्रान्तः । छा ॥ तथा … एवमिव भवति … ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । राजन् । तथा - तेनप्रकारेण । करोमीतिशेषः । इत्युक्त्वा । कर्णे - जयसेनाश्रोत्रे । कथितवान् । किमिति । उद्यानेसर्पदंशनं सम्भविष्यतीति । एवमिवभवति - अनेनप्रकारेणभविष्यति । इति - एवमुक्त्वा । निष्क्रान्तः - निर्गतः ॥

---

राजा ॥ जयसेने ! प्रवातशयनमार्ग मादेशय ॥

---

राजेति ॥ राजा । प्राह । हे जयसेने । प्रवातशयनमार्ग - प्रवातशयनपथम् । आदेशय - आदर्शय । देव्याइतिशेषः ।

---

प्रति ॥ इदो इदो देवो । छा ॥ इतइतो देवः ॥

---

प्रतिहारीति ॥ प्रतिहारी । वक्ति । देवः - राजा । इतइतः - अनेनानेनमार्गेण । गच्छत्वितिशेषः ॥

---

ततःप्रविशति शयनस्था देवी परिव्राजिका विभवतश्च परिवारः ॥

---

ततइति ॥ ततः - अनन्तरम् । शयनस्था - पर्यंकस्थिता । देवी - पट्टमहिषी । परिव्राजिका - पण्डितकौशिकी । विभवतः - वैभवमनुसृत्य । परिवारः - परिजनश्च । प्रविशति - रङ्गस्थलम्प्राप्नोति ॥

---

देवी ॥ भअवदि ! रमणीआ कहा । तदो तदो । छा ॥ भगवति ! रमणीया कथा । ततस्ततः ॥

---

देवीति ॥ देवी । वदति । हे भगवति - परिव्राजिके । कथा-विनोदश्चरित्रं । रमणीया - अतिमनोहरा । ततस्ततः - अनन्तरम् । आदराद्विरुक्तिः । कथयेतिशेषः ॥

---

परि ॥ सदृष्टिक्षेपम् । अतःपरं पुनः कथयिष्यामि । अत्रभवान् विदिशेश्वरः प्राप्तः ॥

---

परिव्राजिकेति ॥ परिव्राजिका । सदृष्टिक्षेपम् - सनयनप्रसारं यथातथा । कथयति । देवि । अतःपरम् - अनन्तरम् । पुनः - भूयः । कथयिष्यामि - वक्ष्यामि । अत्रभवान् - पूज्यः । विदिशेश्वरः - विदिशाख्यपुराधीश्वरः । प्राप्तः - समागतः ॥

---

देवी ॥ अम्मो भट्टा । इत्युत्थातु मिच्छति । छा ॥ अहह भर्ता ... ॥

---

देवीति ॥ देवी । वदति । भर्ता - आर्यपुत्रः । समागतःकिमितिशेषः । अहह - आश्चर्यम् । इति - एवमुक्त्वा । उत्थातुम् - उद्गन्तुम् । इच्छति - वाञ्छति ॥

---

राजा ॥ अलमल मुपचारयन्त्रणया ॥

श्लो ॥ अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालम्बि ।
चरणं रुजापरीतं कलभाषिणि ! मांच पीडयितुं ॥६१

---

राजेति ॥ राजा । प्राह । उपचारयन्त्रणया - उत्थानोपचारनिर्बन्धेन । अलमलम् - मास्तु । नि ॥ अलंभूषणपर्याप्ति शक्तिवारणवाचकमित्यमरः ॥ अनुचितेति ॥ कलभाषिणि - अव्यक्तमधुरभाषिणि । अनुचितनूपुरविरहम् - अनर्हमञ्जीरवियोगम् । तपनीयपीठिकालम्बि - हेमपीठस्थितं । रुजापरीतं - व्याधिसहितं । चरणम् - पादम् । माञ्च । पीडयितुं - क्लेशयितुं । नार्हसि - नोचितासि ॥

---

धारि ॥ जेदु जेदु अज्जउत्तो । छा ॥ जयतुजय त्वार्यपुत्रः ॥

---

धारिणीति ॥ धारिणी । वक्ति । आर्यपुत्रः - भर्ता । जयतुज

यतु - सर्वोत्कर्षेणवर्ततताम् । आदराद्विरुक्तिः॥

---

परि॥ विजयतां देवः॥

---

परिव्राजिकेति॥ परिव्राजिका । वक्ति। देवः - राजा । विजयताम् - शत्रूनजयतु ॥ सू॥ विपराभ्यांजेरि त्यात्मनेपदम्॥

---

राजा॥ परिव्राजिकां प्रण म्योपविश्यच। देवि! अपिसह्या वेदना॥

---

राजेति॥ राजा। परिव्राजिकाम् - पण्डितकौशिकीं । प्रणम्य - नमस्कृत्य । उपविश्य - निषण्णोभूत्वाच । प्राह। देवि - राज्ञि। वेदना - पादरुजा । सह्यापि - सोढव्याकिम्॥

---

धारि॥ अत्थि मे विसेसो। छा॥ अस्ति मे विशेषः॥

---

धारिणीति॥ धारिणी । वक्ति। मे - मम । विशेषः - बाधातिशयः । अस्ति - विद्यतएव॥

---

ततः प्रविशति यज्ञोपवीत संवीतांगुष्ठ ससम्भ्रान्तो विदूषकः॥

---

ततइति॥ ततः - अनन्तरम् । यज्ञोपवीतसंवीतांगुष्ठः - यज्ञसूत्रपरिवेष्टितांगुष्ठः । विदूषकः - गौतमाख्योनटविशेषः । सम्भ्रान्तः - त्वरितस्सन् । प्रविशति - धारिणीराजसमीपम्प्राप्नोति । अत्रकल्पनाया गम्यमानत्वा च्छलनंनाम सन्ध्यङ्गमुक्तंभवति॥

---

विदू॥ परित्ताअदु परित्ताअदु भवं। सप्पेणम्हि द

द्दो । छा ॥ परित्रायतां परित्रायतां भवान् । सर्पेणास्मि दष्टः ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । राजन् । भवान् । परित्रायतांपरित्रायतां - रक्षतुरक्षतु । अहं । सर्पेण -भुजगेन । दष्टः - क्षतोऽस्मि ॥

---

सर्वे विषण्णाः ॥

---

सर्वइति ॥ सर्वे - तत्रत्याजनाः । विषण्णाः - दुःखिताभूताः ॥

---

राजा ॥ कष्टं कष्टम् । क्व भवान् परिभ्रान्तः ॥

---

राजेति ॥ राजा । प्राह । कष्टंकष्टम् - अतीवकष्टम् । भवान् । क्व - कुत्र । परिभ्रान्तः - सञ्चरितः ॥

---

विदू ॥ देवीं देक्खिस्संति आआरपुप्फकारणादो पमदवणं गदोम्हि । छा ॥ देवीं द्रक्ष्यामी त्याचारपुष्पकारणा त्प्रमदवनं गतोऽस्मि ॥

---

विदूषकइति ॥ विदूषकः । वदति । राजन् । देवीं - पट्टमहिषीम् । द्रक्ष्यामि - विलोकयिष्यामि । इति - एवम् । आचारपुष्पकारणात् - प्रभुदर्शनविषये कुसुमादिग्रहणरूपविधिसद्भावाद्धेतोः । अत्रप्रमाणम् ॥ अग्निहोत्रं गृहं क्षेत्रं धेनुम्बालकमेवच । रिक्तहस्तेननोपेया द्राजानं दैवतंगुरुमिति ॥ प्रमदवनम्-राजागारनिकटोद्यानवनम् । गतः - यातोऽस्मि ॥

---

धा ॥ हद्धी हद्धी अहंज्जेव्व जीविदसंसअणिमित्तं जादा वह्मणस्स । छा ॥ हाधिक् हाधिक् अहमेव जीवितसंशयनिमित्तं जाता ब्राह्मणस्य ॥

---

धारिणीति ॥ धारिणी । वक्ति । हाधिक् हाधिक् - हेतिविषादे । धिगितिनिन्दायाम् । अहंनिन्द्यास्मीत्यर्थः । नि ॥ हाविषादशुगार्तिषु ॥ धिङ्निर्भर्त्सन निन्दयोरि त्युभयत्राप्यमरः ॥ कुतः । अहमेव । ब्राह्मणस्य - विप्रस्य । जीवितसंशयनिमित्तम् - प्राणसन्देहकारणम् । जाता - अभूवम् ॥

---

विदू ॥ तहिं असोअत्थपुप्फकारणादो पसारिदो दक्खिणहत्थो । तदो कोडरविणिग्गदेण सप्पस्वविणा काळेण दंसिदोह्मि । णं एदाणि दुवे दंसणपदाणि । इतिदर्शयति । छा ॥ तस्मिन्नशोकस्थपुष्पकारणात्प्रसारितो दक्षिणहस्तः । ततः कोटरविनिर्गतेन सर्परूपिणा कालेन दंशितोऽस्मि । न न्वेते द्वे दंशनपदे ... ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । राजन् । तस्मिन् - उद्याने । अशोकस्थपुष्पकारणात् - अशोकसम्बन्धिकुसुमग्रहणहेतोः । दक्षिणहस्तः - वामेतरकरः । प्रसारितः - व्यापारितः । ततः - अनन्तरम् । कोटरविनिर्गतेन - वृक्षकोटरप्रस्थितेन । सर्परूपिणा - व्याळस्वरूपेण । कालेन - कृतान्तेन । दंशितः - क्षतोऽस्मि । एतेद्वे । दंशनपदे - दष्टस्थाने । पशाचेतिशेषः । इति - एवमुक्त्वा । दर्शयति - प्रेक्षयति ॥

---

परिव्राजिका ॥

श्लो ॥ छेदो दंशस्य दाहोवा क्षत स्यारक्तमोक्षणम् ।
एतानि दष्टमात्राणा मायुष्याः प्रतिपत्तयः ॥६३॥

सम्प्रति विषवैद्यानां कर्म ॥

---

परिव्राजिकेति ॥ परिव्राजिका । वदति । छेदइति ॥ दंशस्य - क्षतस्थानस्य । छेदः - खण्डनम् । दाहः - तापोवा । क्षतस्य - दंशस्थानस्य । आरक्तमोक्षणम् - सम्यग्रुधिरमोचनंवा । एतानि - उक्तान्यमूनि । दष्टमात्राणाम् - सर्वेषांसर्पदष्टानाम् । आयुष्याः - जीविताय हिताः । सू ॥ तस्मैहितमिति यत्प्रत्ययः ॥ प्रतिपत्तयः - चिकित्सारूपोपायाः । सम्प्रति - इदानीं । विषवैद्यानां - विषापहारिणांभिषजां । कर्म - कृत्यम् ॥

---

राजा ॥ जयसेने ! ध्रुवसिद्धिः क्षिप्र माहूयताम् ॥

---

राजेति ॥ राजा । प्राह । हेजयसेने । ध्रुवसिद्धिः - एतन्नामकोविषवैद्यः । क्षिप्रम् - सत्वरम् । आहूयताम् - आकार्यताम् । त्वयेति शेषः ॥

---

प्रती ॥ जं देवो आणवेदि । इतिनिष्क्रान्ता । छा ॥ यं देव आज्ञापयति … ॥

---

प्रतिहारीति ॥ प्रतीहारी । वक्ति । देवः - महाराजः । यदाज्ञापयति - यन्नियोजयति । तत्करोमीति वाक्यशेषः ॥ इति - इत्थमुक्त्वा । निष्क्रान्ता - निर्गता ॥

---

विदू ॥ अहो पापेण मिच्चुणा गिहीदोम्हि । छा ॥ अहो पापेन मृत्युना गृहीतोऽस्मि ॥

---

विदूषकइति ॥ विदूषकः । ब्रवीति । अहं । पापेन - दुष्टेन । मृत्युना । गृहीतः - आकृष्टोऽस्मि । अहो - आश्चर्यम् ॥

---

राजा॥ मा कातरो भूः। अविषोऽपि कदाचि दंशो भवेत्॥

---

राजेति॥ राजा। प्राह। गौतम। त्वं। कातरः - अधीरः। माभूः- माभव। कुतः। दंशः - व्याळक्षतिः। कदाचित् - जातु। अविषः - विषशून्योपि। भवेत् - स्यात्। व्या॥ सम्भावनायांलिङ्॥

---

विदू॥ कहं णभाइस्सं। सिमिसिमाअंति मे अंगाइं। इतिविषवेगं रूपयति। छा॥ कथं नभेष्यामि। सिमसिमायन्ति मेऽङ्गानि…॥

---

विदूषकइति॥ विदूषकः। ब्रूते। राजन्। अहं। कथम् - केनप्रकारेण। नभेष्यामि - भीतोनभविष्यामि। मे - मम। अङ्गानि - अवयवाः। सिमसिमायन्ति - चिमचिमंकुर्वंति। इति - इत्थं। विषवेगं - विषजवम्। रूपयति - प्रकटयति। विषवेगास्तु - वसन्तराजीये॥ वैवर्ण्यं वेपथुर्दाहः पीनस्कन्धस्य भञ्जनम्। दुःखंनाड्यं मृतिश्चेति विषवेगास्तुचरष्टधेति॥

---

धारि॥ हा दंसिदं विआरेण अवळंबध बम्हणं। छा॥ हा। दंशितं विकारे णावलम्बध्वम्ब्राह्मणम्॥

---

धारिणीति॥ धारिणी। वक्ति। हा - कष्टं। विकारेण - विषदोषेण। दंशितम् - व्याप्तम्। ब्राह्मणम् - बाडवम्। अवलम्बध्वम् - गृह्णीध्वम्॥

---

परिव्राजिका ससम्भ्रम मवलम्बते॥

---

परिव्राजिकेति ॥ परिव्राजिका । ससम्भ्रमम् - सत्वरम् । अव लम्बते - अवष्टम्भंकुरुते ॥

---

विदू ॥ राजान मवलोकय। भो बाळपिअवअस्सोम्हि तुए अविआरेण अपुत्ताए जणणीए जोगक्खेमं वहेहि । छा ॥ … भो बालप्रियवयस्योऽस्मि ते । अविकारे णापुत्राये जनन्यै यो गक्षेमं वह ॥

---

विदूषकइति ॥ विदूषकः । राजानम् - नृपम् । अवलोकय - प्रे क्षच । वदति । भो - राजन् । ते - तव । अहं । बालप्रियवयस्यः - बा लस्सस्नेत्रइष्टसखः । अस्मि - भवामि । अपुत्रायै - सुतहीनायै । जनन्यै - मात्रे । ममेतिशेषः । अविकारेण - विकृत्यभावेन । योगक्षेमम् - रक्षण भारम् । वह - धर ॥

---

राजा ॥ माभैषी गौतम । अचिरा त्त्वां वैद्य श्चिकित्सि ष्यति । स्थिरो भव ॥

---

राजेति ॥ राजा । प्राह । हे गौतम । माभैषीः - भयंनप्राप्नुहि । वैद्यः - भिषक् । त्वां । अचिरात् - शीघ्रम् । चिकित्सिष्यति - विषाप नयनेननिवृत्तवेदनंकरिष्यति । तस्मात् । स्थिरः - धृढचित्तः । भव - स्याः ॥

---

प्रविश्य जयसेना ॥ आणाविदो धुवसिद्धी विण्णावेदि । इह उजेव्व गोदमो आणीअदुत्ति । छा ॥ … आज्ञप्तो ध्रुवसिद्धि र्विज्ञापयति । इहैव गौतम आनीयतामिति ॥

---

प्रविश्येति ॥ जयसेना । प्रविश्य - राजसमीपमाप्य । वद

ति। किमिति। राजन्। आज्ञप्तः - आगच्छेतिनियुक्तः। ध्रुवसिद्धिः - एतन्नामाविषभिषक्। विज्ञापयति - निवेदयति। कथम् - गौतमः। इह - अत्रैव। आनीयताम् - आह्वियतामिति॥

---

राजा॥ तेनहि वर्षवरप्रतिगृहीतमेव तत्रभवत स्सकाश म्प्रापय॥

---

राजेति॥ राजा। प्राह। जयसेने। तेनहि - तेनहेतुना। वर्षवरप्रतिगृहीतम् - वर्षवरेण - कंचुकिना। प्रतिगृहीतम् - अवलम्बितमेव। गौतममितिशेषः। तत्रभवतः - ध्रुवसिद्धेः। सकाशम् - समीपम्। प्रापय - नय॥

---

जय॥ तह। छा॥ तथा॥

---

जयसेनेति॥ जयसेना। वक्ति। राजन्। तथा - तेनप्रकारेण। भवत्वितिशेषः॥

---

विदू॥ देवीं विलोक्य। भोदि! जीवेअं णवा जं मए तत्त भवंतं सेवमाणेण दे अवरद्धं तं मरिसेहि। छा॥ ... भवति! जीवेयं नवा। य न्मया तत्रभवन्तं सेवमानेन तेऽपराद्धं त न्मर्षयस्व॥

---

विदूषकइति॥ विदूषकः। देवीं - पट्टमहिषीम्। विलोक्य - वीक्ष्य। वक्ति। भवति - पूज्ये। देवि। अहं। जीवेयम् - प्राणान्धारयेयंवा। नवा - नजीवेयंवा। तस्मात्। तत्रभवन्तम् - माननीयंराजानं। सेवमानेन - सेवांकुर्वाणेन मया। ते - तुभ्यम्। यदपराद्धम् - यदपराकृ

तम्। तत्-भागः। मर्षयस्व-सहस्व॥

---

धारि॥ दीहाउसो होहि। छा॥ दीर्घायुष्यो भव॥

---

धारिणीति॥ धारिणी। ब्रवीति। गौतम। त्वं। दीर्घायुष्यो भव-चिरंजीव॥

---

निष्क्रान्तो विदूषकः प्रतिहारीच॥

---

निष्क्रान्तइति॥ विदूषकः-गौतमः। प्रतिहारी-जयसेनाच। निष्क्रान्तः-निर्गतः। प्रतिहारीपक्षे निष्क्रान्तेति लिङ्गव्यत्ययः॥

---

राजा॥ प्रकृतिभीरु स्तपस्वी ध्रुवसिद्धेरपि यथार्थनाम्न स्सिद्धिं नमन्यते॥

---

राजेति॥ राजा। प्राह। प्रकृतिभीरुः-स्वभावेनभयशीलः। तपस्वी-दीनोगौतमः। यथार्थनाम्नः-अन्वर्थनामधेयस्य। ध्रुवसिद्धेः-एतन्नाम्नो वैद्यस्यापि। सिद्धिं-मन्त्रादिसिद्धिं। नमन्यते-नविश्वसितीति॥

---

प्रविश्यजयसेना॥ जेदु जेदु भट्टा। धुवसिद्धी विण्णावेदि। उदकुंभविधाणेण सप्पमुद्दिआ कप्पिदव्वा। ता अण्णेसीअदुत्ति। छा॥ ... जयतु जयतु भर्ता। ध्रुवसिद्धि र्विज्ञापयति। उदकुम्भविधानेन सर्पमुद्रिका कल्पितव्या तदन्विष्यतामिति॥

---

प्रविश्येति॥ जयसेना। प्रविश्य-राजनिकटम्प्राप्य। वक्ति।

भर्ता - महाराजः । जयतु - सर्वोत्कर्षेणवर्ततान् । आदराद्विरुक्तिः । ध्रुवसिद्धिः - एतन्नामकोभिषक् । विज्ञापयति - निवेदयति । उदकुम्भविधानेन - पूर्णकलशविधिना । सर्पमुद्रिका - नागमुद्रा । कल्पितव्या - सम्पादनीया । तत् - तस्मात् । अन्विष्यताम् - मृग्यतामिति । सर्पमुद्रिकेत्यनुषजयते ॥

---

धारि ॥ एदं सप्पमुद्दिअं अंगुलीअअं । पच्छा मह हत्थे देहि णं । छा ॥ एत त्सर्पमुद्रिक मंगुळीयकम् । पश्चा न्मम हस्ते दे ह्येतत् ॥

---

धारिणीति ॥ धारिणी - एतन्नाम्नीपट्टमहिषी । वक्ति । सर्पमुद्रिकम् - नागमुद्रासहितम् । अंगुळीयकम् - करशाखाभरणम् । एतत् - इदम् । गृह्णीष्वेतिशेषः । पश्चात् - कार्यसिद्ध्यनन्तरम् । एतत् - नागमुद्रांगुळीयकम् । मम । हस्ते - करे । देहि - प्रयच्छ ॥

---

इत्यंगुळीयकं ददाति ॥

---

इतीति ॥ इति - एवमुक्त्वा । अंगुळीयकं । ददाति - प्रयच्छति । देवीतिशेषः ॥

---

प्रतिहारी गृहीत्वा प्रस्थिता ॥

---

प्रतिहारीति ॥ प्रतिहारी । गृहीत्वा - अंगुळीयकमुपादाय । प्रस्थिता - प्रयातुमुद्युक्ता ॥

---

राजा ॥ जयसेने ! कर्मसिद्धा वाशुप्रतिपत्ति मानय ॥

---

राजेति ॥ राजा। प्राह। जयसेने। कर्मसिद्धौ - कार्यसिद्धौ। आशु - अविलम्बितंयथातथा। प्रतिपत्तिं - वार्ताम्। आनय - आहर ॥

---

प्रति ॥ जं देवो आणवेदि। इतिनिष्क्रान्ता। छा ॥ य देव आज्ञापयति ... ॥

---

प्रतिहारीति ॥ प्रतिहारी। वक्ति। देवः - राजा। यदाज्ञापयति - यन्नियोजयति। तत्करोमीतिवाक्यशेषः। इति - एवमुक्त्वा। निष्क्रान्ता - निर्गता ॥

---

परि॥ यथा हृदय माचष्टे तथा निर्विषो गौतमः॥

---

परिव्राजिकेति॥ परिव्राजिका। वदति। हृदयम् - चित्तं। यथा - येनप्रकारेण। आचष्टे - कथयति। तथा - तेनप्रकारेण। गौतमः। निर्विषः - विषनिर्मुक्तः। भवतीतिशेषः ॥

---

राजा॥ भूया देवम्॥

---

राजेति॥ राजा। प्राह। एवम् - अनेनप्रकारेण। भूयात् - अस्तु ॥

---

ततःप्रविशति जयसेना ॥

---

ततइति॥ ततः - अनन्तरम्। जयसेना। प्रविशति - राजनिकटंप्राप्नोति ॥

---

जय॥ जेदु जेदु भट्टा। णिवुत्तविसवेगो गोदमो मुहुत्ते

ण पकिदित्थो संवुत्तो। छा॥ जयतु जयतु भर्ता। निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थ स्संवृत्तः॥

---

जयसेनेति॥ जयसेना। वक्ति। भर्ता - महाराजः। जयतु - सर्वोत्कर्षेणवर्तताम्। आदराद्विरुक्तिः। निवृत्तविषवेगः - विगतविषजवः। गौतमः - एतन्नामकोविदूषकः। मुहूर्तेन - अल्पेनैवकालेन। प्रकृतिस्थः - स्वस्थः। संवृत्तः - जातः॥

---

धारि॥ दिट्ठिआ वच्चणीआदो मुत्तम्हि। छा॥ दिष्टया वाच्या न्मुक्तास्मि॥

---

धारिणीति॥ धारिणी। ब्रवीति। दिष्ट्या - दैवेन। अहं। वाच्यात् - अपवादात्। मुक्ता - मोक्षिता। अस्मि - भवामि॥

---

प्रती॥ एसोउण वाहतओ अमच्चो विण्णवेदि। राअकज्जं बहु मन्तिदव्वं। दंसणेन अणुग्गहं इच्छामित्ति। छा॥ एषपुन र्वाहत कोऽमात्यो विज्ञापयति। राजकार्यं बहु मन्त्रितव्यं दर्शने नानुग्रहमिच्छामीति॥

---

प्रतीहारीति॥ प्रतीहारी। कथयति। वाहतकः - एतन्नामकः। एषः - अयम्। अमात्यः - सचिवःपुनः। विज्ञापयति - निवेदयति। राजकार्यं - नृपकृत्यम्। बहु - अनेकम्। मन्त्रितव्यम् - आलोचनीयम्। अस्तीतिशेषः। तस्मात्। दर्शनेन - विलोकनप्रदानेन। अनुग्रहम् - अभ्युपपत्तिम्। इच्छामि - स्पृहयामीति॥

---

धारि॥ गच्छदु अज्जउत्तो कज्जसिद्धिए। छा॥ गच्छ

त्वार्यपुत्रः कार्यसिद्धये ॥

धारिणीति ॥ धारिणी । वक्ति । आर्यपुत्रः - भर्ता । कार्यसिद्धये - राजकार्यनिष्पादनाय । गच्छतु - प्रयातु ॥

राजा ॥ देवि ! आतपाक्रान्तोऽय मुद्देशः । शीतक्रिया चास्या रुजः प्रशस्ता । तदन्यत्र नीयतां शयनीयम् ॥

राजेति ॥ राजा । प्राह । हे देवि । अयम् - एषः । उद्देशः । प्रदेशः । आतपाक्रान्तः - आतपयुतः । अस्याः - एतस्याः । रुजः - क्लेशस्य । शीतक्रिया - शीतोपचारः । प्रशस्ता - युक्ता । तत् - तस्मात्कारणात् । शयनीयम् - शय्या । अन्यत्र - अन्यस्मिन्देशे । नीयताम् - प्राप्यताम् ॥

धारि ॥ पालिआ अज्जउत्तवअणं अणुचिठ्ठध । छा ॥ पालिताः ! आर्यपुत्रवचन मनुतिष्ठत ॥

धारिणीति ॥ धारिणी । वक्ति । पालिताः - हेदासिकाः । आर्यपुत्रवचनम् - भर्तृवचः । अनुतिष्टत - कुरुत ॥

परिजन स्तथा प्रक्रान्तः ॥

परिजनइति ॥ परिजनः - परिवारजनः । तथा - तेनप्रकारेण । प्रक्रान्तः - कर्तुमुपक्रान्तवान् ॥

निष्क्रान्ता देवी परिव्राजिका परिजनश्च ॥

निष्क्रान्तेति ॥ देवी - पट्टमहिषी । परिव्राजिका - योगिनी ।

परिजनः - परिवारजनश्च । निष्क्रान्ता - निर्गता ॥

---

राजा ॥ जयसेने ! गूढेन पथा प्रमदवन म्प्रापय ॥

---

राजेति ॥ राजा । प्राह । हे जयसेने । गूढेन - गुप्तेन । पथा - मार्गेण । प्रमदवनम् - अन्तःपुरोचितोद्यानम् । प्रापय - नय । मामित्य ध्याहारः ॥

---

जय ॥ एदुएदु देवो । छा ॥ एत्वेतु देवः ॥

---

जयसेनेति ॥ जयसेना । वक्ति । देवः - राजा । एतु - आगच्छतु । इतइतिशेषः । आदराद्द्विरुक्तिः ॥

---

राजा ॥ जयसेने ! ननु समाप्तकाम्यो गौतमः ॥

---

राजेति ॥ राजा । प्राह । हे जयसेने । गौतमः - एतन्नामको विदूषकः । समाप्तकाम्योननु - निर्वर्तितसंकल्पः किम् ॥

---

जय ॥ अहइं । छा ॥ अथकिम् ? ॥

---

जयसेनेति ॥ जयसेना । वक्ति । अथकिम् - तथैव । समाप्तकाम्यो भूदित्यर्थः ॥

---

राजा ॥

श्लो ॥ इष्टाधिगमनिमित्तं प्रयोग मेकान्तसाध्यमपि मत्वा ।
सन्दिग्धमेव सिद्धौ कातर माशंकते चेतः ॥६३॥

---

राजेति ॥ राजा । प्राह । इष्टाधिगमनिमित्तम् - इष्टाधिगमे -

इष्टप्राप्तौ। निमित्तम्-कारणम। एकान्तसाध्यम्-एकान्तेन-मुखयत्वेन। साध्यम्-साधनीयमपि। प्रयोगम-उपायम्। सिद्धौ-कार्यनिष्पत्तौ। संदिग्धम्-कार्यस्यान्नवेतिसन्देहयुक्तमेव। मत्वा-आलोच्य। चेतः-हृदयम्। कातरम्-सभयंयथातथा। आशंकते-तर्कयति ॥

---

ततःप्रविशति विदूषकः ॥

---

ततइति ॥ ततः-अनन्तरम्। विदूषकः। प्रविशति-राजसमीपम्प्राप्नोति ॥

---

विदू ॥ जेदु जेदु भवं। सिद्धाइ दे मंगल कम्माइ। छा ॥ जयतु जयतु भवान्। सिद्धानि ते मङ्गळकर्माणि ॥

---

विदूषकइति ॥ विदूषकः। ब्रवीति। भवान्। जयतु-सर्वोन्नतोभवतु। आदराद्द्विरुक्तिः। ते-तव। मङ्गळकर्माणि-शुभकृत्यानि। सिद्धानि-फलितानि ॥

---

राजा ॥ जयसेने! त्वमपि नियोग मशून्यं कुरु ॥

---

राजेति ॥ राजा। प्राह। हे जयसेने। त्वमपि। नियोगम्-स्वव्यापारम्। अशून्यम्-अरिक्तं। कुरु-विधेहि ॥

---

जय ॥ जं देवो आणवेदि। इतिनिष्क्रान्ता। छा ॥ यद्देव आज्ञापयति … ॥

---

जयसेनेति ॥ जयसेना। वक्ति। देवः-प्रभुः। यदाज्ञापयति-यन्नियोजयति। तत्करोमीतिवाक्यशेषः। इति-एवमुक्त्वा। निष्क्रान्ता-निर्गता ॥

---

राजा ॥ गौतम ! क्षुद्रा माधविका नखलु किंचि द्विचारित मनया ॥

---

राजेति ॥ राजा । प्राह । हे गौतम । माधविका - एतन्नामिकाधनागाराधिकृता । क्षुद्रा - स्वल्पा । अतः । अनया - माधविकया । किंचित् - किमपि । नविचारितंखलु - नपर्यालोचितंकिम् ॥

---

विदू ॥ देवीए अंगुलीअमुद्दिअं देक्खिअ कहं विआरेदि । छा ॥ देव्या अंगुळीयमुद्रिकां दृष्ट्वा कथं विचारयति ॥

---

विदूषकइति ॥ विदूषकः । कथयति । देव्याः - पट्टमहिष्याः । अंगुळीयमुद्रिकां - नागमुद्रांगुळीयकं । दृष्ट्वा - वीक्षय । कथम् - किमिति । विचारयति - आलोचयति ॥

---

राजा ॥ नखलु मुद्रामधिकृत्य ब्रवीमि । तयो र्द्वयोः किंनिमित्तो मोक्षः किंवा देव्या परिजन मतिक्रम्य भवान् संदिष्ट इत्येव तया प्रष्टव्यम् ॥

---

राजेति ॥ राजा । प्राह । गौतम । मुद्राम् - नागमुद्राम् । अधिकृत्य - उद्दिश्य । अहं । नब्रवीमि - नवदामि । किंतु । तयोर्द्वयोः - माळविकावकुलावळिकयोः । मोक्षः - काराविमोचनम् । किंनिमित्तः - किंप्रयोजनः । देव्या - पट्टमहिष्या । परिजनं - स्वपरिवारजनम् । अतिक्रम्य - विहाय । भवान् । सन्दिष्टः - प्रेषितोऽसि । किंवा - कोवाहेतुः । इत्येव - एवमेव । तया - माधविकया । प्रष्टव्यम् - प्रश्नःकर्तव्यः ॥

---

विदू ॥ णं पुच्छिदोम्हि । मंदस्सवि पुणो मे तह पच्चुप्प

ण्णं उत्तरं आसि ।छा॥ ननु पृष्टोऽस्मि। मन्दस्यापि पुन र्मे तथा प्रत्युत्पन्न मुत्तरमासीत् ॥

---

विदूषकइति ॥ विदूषकः। वक्ति। राजन्। पृष्टोऽस्मिननु-तयाप्रश्नंकृतोऽस्म्येव। मन्दस्य-मूढस्यापि। मे-ममपुनः। उत्तरं-प्रतिवाक्यं। तथा-समयोचितेनप्रकारेण। प्रत्युत्पन्नम्-प्रतिवचनत्वेनजातं। आसीत्-अभूत्॥

---

राजा॥ कथ्यताम्॥

---

राजेति॥ राजा। प्राह। गौतम। कथ्यताम्-उच्यताम्। प्रतिवचनमितिशेषः॥

---

विदू॥ भणिदं मए। देव्वचिंतएहिं विण्णाविदो राआ सोवसग्गं वो णक्खत्तं। ता अवस्सं सव्वबंधमोक्खो करीअदुत्ति।छा॥ भणितं मया। दैवचिन्तकै र्विज्ञप्तो राजा सोपसर्गं वो नक्षत्रम्। त दवश्यं सर्वबन्धमोक्षः क्रियतामिति॥

---

विदूषकइति॥ विदूषकः। कथयति। मया। भणितं-कथितं। किमिति। दैवचिन्तकैः-ज्योतिश्शास्त्रवेत्तृभिः। वः-युष्माकम्। नक्षत्रम्-जन्मभम्। सोपसर्गं-सोपद्रवम्। इति। राजा-नृपः। विज्ञप्तः-निवेदितः। केनप्रकारेण। तत्-तस्मात्। अवश्यम्-निश्चितं यथातथा। सर्वबन्धमोक्षः-सर्वेषाम्-कृतापराधानांजनानां। येबन्धाः-निगळादिबन्धनानि। तेषां। मोक्षः-विमोचनम्। क्रियतां-विधीयतामिति॥

---

राजा ॥ सहर्षं । ततस्ततः ॥

राजेति ॥ राजा । सहर्ष-ससंतोषंयथातथा । प्राह । ततस्ततः - अनन्तरम् । किंजातमितिशेषः ॥

विदू ॥ तं सुणिअ देवीए इरावदीए चित्तं रक्खंतीए " राआकिळ मोअअदित्ति " अहं संदिठ्ठोत्ति । तदो युज्जदि त्ति ताए संबादिदो अत्थो । छा ॥ तच्छ्रुत्वा देव्या इरावत्या श्चित्तं रक्षन्त्या " राजाकिल मोचयति " इ त्यहं संदिष्टइति । ततो युज्यतइति तया संवादितोऽर्थः ॥

विदूषकइति ॥ विदूषकः । वक्ति । कथम् । तत्-वाक्यम् । श्रुत्वा - आकर्ण्य । इरावत्याः - एतन्नाम्नचाराज्ञोद्वितीयपत्न्याः । चित्तम् - हृदयम् । रक्षन्त्या - प्रतिपालयन्त्या । देव्या - पट्टमहिष्या । राजाकिल - नृपोहि । मोचयति - काराविमुक्तिकारयति । इति - अनेनहेतुना । अहम् । सन्दिष्टः - प्रेषितः । इति - एवम् । प्रतिवाक्यंदत्तवानिति पूर्वेणानुषङ्गः । ततः - अनन्तरम् । युज्यते - युक्तमित्युक्त्वा । तया - मालविकया । अर्थः - प्रयोजनम् । संवादितः - संवादेनप्रमाणीकृतः ॥

राजा ॥ विदूषकं परिष्वज्य । सखे ! प्रियोहंखलु तव ॥

श्लो ॥ नहि बुद्धिगुणेनैव सुहृदा मर्थदर्शनम् ।
कार्यसिद्धिपथ स्सूक्ष्म स्नेहेना प्युपलभ्यते ॥६४॥

राजेति ॥ राजा । विदूषकम् - गौतमं । परिष्वज्य - आलिङ्ग्य । प्राह । सखे - प्रिय । अहं । तव । प्रियः - सुहृत्खलु । नहीति॥ बुद्धिगुणेन - शेमुषीधर्मेणैव । सुहृदाम् - मित्राणाम् । अर्थदर्शनम् - का

र्यप्रेक्षणम्। नहि - नभवतिहि। किंतु। सूक्ष्मः - दृढादनालोचनीयः। कार्यसिद्धिपथः - कार्यनिष्पत्तिमार्गः। स्नेहेन - प्रेम्णापि। उपलभ्यते - प्राप्यते॥

---

विदू॥ तुवरदु भवं। समुद्दगेहके सहीसहिदं मालविअं ठाविअ भवंतं पच्चुग्गदोम्हि। छा॥ त्वरता म्भवान्। समुद्र गृहके सखीसहितां माळविकां स्थापयित्वा भवन्त म्प्रत्युद्ग तोऽस्मि॥

---

विदूषकइति॥ विदूषकः। वक्ति। भवान्। त्वरताम् - त्वर यागच्छतु। कुतः। समुद्रगृहके - जलयन्त्रगृहे। नि॥ समुद्रगृहमित्याहु र्जलयन्त्रनिकेतनमिति हारावळी॥ सखीसहितां - प्रेयसीयुक्ताम्। माळ विकाम् - एतन्नाम्नींबालिकां। स्थापयित्वा - निवेश्य। भवन्तम् - त्वां। प्रत्युद्गतः - प्रत्युद्यातोऽस्मि॥

---

राजा॥ अह मेनां सम्भावयामि। ग च्छाग्रतः॥

---

राजेति॥ राजा। प्राह। अहम्। एनां - माळविकां। संभा वयामि - बहूकरोमि। त्वम्। अग्रतः - पुरतः। गच्छ - याहि॥

---

विदू॥ एदुएदु भवं। परिक्रम्य। एदं समुद्दगेहकं। छा॥ एत्वेतु भवान्। ... एत त्समुद्रगृहकम्॥

---

विदूषकइति॥ विदूषकः। ब्रवीति। भवान्। एत्वेतु - इतआ गच्छतु। आदराद्विरुक्तिः। परिक्रम्य - किञ्चिद्गत्वा। प्राह। समुद्रगृह कम् - जलयन्त्रागारम्। एतत् - इदंपुरोदृश्यतइत्यर्थः॥

---

राज ॥ साशङ्कम् । वयस्य एषा कुसुमापचयव्यग्रहस्ता सख्या स्ते इरावत्याः परिचारिका चन्द्रिका सन्निकृष्ट माग च्छति । इतस्ताव दावां भित्तिगूढौ भवावः ॥

---

राजेति ॥ राजा । साशंकं किञ्चि द्भयसहितंयथातथा । प्राह । वयस्य - हेसखे । कुसुमापचयव्यग्रहस्ता - पुष्पलवनव्यासक्तकरा । ते - तव । सख्याः - सुहृद्भूतायाः । इरावत्याः । परिचारिका - दासिका । एषा - असौ । चन्द्रिका - एतन्नाम्नीयुवतिः । सन्निकृष्टम् - समीपम् । आगच्छति - आयाति । तस्मात् । आवाम् । इतस्तावत् - एतस्मिन्प्रदेशेतु । भित्तिगूढौ - कुड्यान्तरितौ । भवावः - स्वः ॥

---

विदू ॥ अहो कुम्भीळएहिं कामुएहिंच परिहरणीआ चन्दिआ । छा ॥ अहो कुम्भीलकैः कामुकैश्च परिहरणीया चन्द्रिका ॥

---

विदूषकइति ॥ विदूषकः । वदति । कुम्भीलकैः - पाटच्चरैः । कामुकैः - कामिभिश्च । चन्द्रिका - कौमुदी । परिहरणीया - विसर्जनीया । अहो - आश्चर्यम् ॥

---

उभौ यथासमर्थितं कुरुतः ॥

---

उभाविति ॥ उभौ - द्वौराजविदूषकौ । यथासमर्थितं - यथालोचितम् । कुरुतः - विधत्तः ॥

---

राज ॥ कथंनु ते सखी मां प्रतिपालयति । एतस्मिन्नेनां गवाक्ष माश्रित्य याव दवलोकयामि ॥

राजेति ॥ राजा । प्राह । हे गौतम । ते - तव । सखी - मित्रभूता माळविका । कथंनु - केनवाप्रकारेण । मां प्रतिपालयति - निरीक्षते । एनां - माळविकां । गवाक्षम् - वातायनम् । आश्रित्य - अधिगत्य। यावदवलोकयामि - द्रक्ष्यामि । एहि - आगच्छ ॥

विदू ॥ तहा । छा ॥ तथा ॥

विदूषकइति ॥ विदूषकः । वक्ति । तथा - तेनप्रकारेण । अस्त्वितिशेषः ॥

उभौ विलोकयन्तौ स्थितौ ॥

उभाविति ॥ उभौ - राजविदूषकौ । विलोकयन्तौ - पश्यंतौ। स्थितौ - स्तः ॥

ततःप्रविशति माळविका वकुलावळिकाच ॥

ततइति ॥ ततः - अनन्तरम् । माळविका - एतन्नामिकाबालिका । वकुलावळिका - एतन्नाम्नीमाळविकासखीच । प्रविशति - रङ्गस्थलम्प्राप्नोतीतिप्रत्येकान्वयः ॥

वकुला ॥ सहि पणम भट्टारं । छा ॥ सखि ! प्रणम भर्तारम् ॥

वकुलावळिकेति ॥ वकुलावळिका । वक्ति । सखि - हेसहचरि । भर्तारम् - राजानम् । प्रणम - नमस्कुरु ॥

माळ ॥ णमो दे जो पासदो पिठ्ठदो पेक्खीअदि । छा ॥
नम स्ते यः पार्श्वतः पृष्ठतश्च दृश्यते ॥

माळविकेति ॥ माळविका । वदति । राजन् । ते - तुभ्यं । नमः - अभिवादः । यः - भवान् । पार्श्वतः - पक्षयोः । पृष्टतः - पश्चाद्भागे च । दृश्यते - प्रेक्षयते । सर्वत्र । सर्वदानुचिंत्यमानत्वा द्भवान् दृशयत इत्यर्थः ॥

राजा ॥ शंके मे प्रतिकृतिं निर्दिशति ॥

राजेति ॥ राजा । प्राह । मे - मम । प्रतिकृतिं - प्रतिमां । निर्दिशति - दर्शयतीति । शंके - मन्ये ॥

माळ ॥ सहर्षं द्वारमवलोक्य । हळा मं विप्पळंभेसि । छा ॥
... हला मां विप्रलभसे ॥

माळविकेति ॥ माळविका । सहर्षं - ससन्तोषंयथातथा । द्वारम् - प्रतीहारं । अवलोक्य - वीक्षय । वदति । हला - सखि । मां । विप्रलभसे - वञ्चयसे ॥

राजा ॥ हर्षविषादाभ्या मत्रभवत्याः प्रीतोऽस्मि ॥
श्लो ॥ सूर्योदये भवति या सूर्यास्तमयेच पुण्डरीकस्य ।
वदनेन सुवदनाया स्ते समवस्थे क्षणा दूढे ॥६५॥

राजेति ॥ राजा । प्राह । अत्रभवत्याः - पूजयायामाळविकायाः । हर्षविषादाभ्याम् - मोदखेदाभ्यां - प्रीतः - सन्तुष्टोऽस्मि । सूर्येति ॥

पुण्डरीकस्य - जलजस्य । सूर्योदये - भास्करोदये । या - अवस्था । वि कासरूपा । भवति । सूर्यास्तमये - सायंकालेच । या - अवस्था । संको चरूपा । भवति । ते - द्वे । समवस्थे - सम्यगवस्थे । सुवदनायाः - सुं दरास्यायाःमाळविकायाः । वदनेन - मुखेन । क्षणात् - क्षणकालेन । ऊढे - धृते ॥

---

वकुला ॥ णं एस चित्तगदो भट्टा चिट्ठदि । छा ॥ न न्वेष चित्रगतो भर्ता तिष्ठति ॥

---

वकुलावळिकेति ॥ वकुलावळिका । वक्ति । ननु - माळविके । एषः - अयम् । भर्ता - राजा । चित्रगतः - आलेख्यलिखितः । तिष्ठति - वर्तते ॥ पश्येत्यध्याहारः ॥

---

उभे ॥ प्रणिपत्य । जेदुजेदु भट्टा । छा ॥ ... जयतुजयतु भर्ता ॥

---

उभेइति ॥ उभे - माळविका वकुलावळिके । प्रणिपत्य - राजा नमभिवाद्य । वदतः । भर्ता - राजा । जयतु - सर्वोन्नत्येनवर्तताम् । आदराद्विरुक्तिः ॥

---

माळ ॥ तहिं संभमे ठिदा भट्टिणो रूवस्स ण तह वितिण्हम्हि जह अज्ज मए भाविदो अवितिण्हदंसणो भट्टा । छा॥ तस्मिन् सम्भ्रमे स्थिता भर्तृरूपस्य न तथा वितृष्णास्मि यथा द्य मया भावि तोऽवितृष्णदर्शनो भर्ता ॥

---

माळविकेति ॥ माळविका । वदति । तस्मिन् - तादृशे । संभ्रमे - औत्सुक्ये । स्थिता - विद्यमाना । अहं । तथा - तेनप्रकारेण ।

भर्तृरूपस्य - नृपसौन्दर्यस्य । नवितृष्णास्मि - अवितृप्तास्मि । यथा - येन प्रकारेण । अद्य - इदानीं । मया । भर्ता - राजा । भावितः - चिन्तितस्सन् । अवितृष्णदर्शनः - अतृप्तदर्शनएव । भवतीतिशेषः ॥

---

विदू ॥ सुदं भवदा । णं किं अत्तभोदी तुए जह दिट्ठा तह णं दिट्ठो भवं । मुधा दाणिं मंजूसा विअ रअणभांडं जोव्वणगव्वं वहसि । छा ॥ श्रुत म्भवता । ननु किं मत्रभवती त्वया यथा दृष्टा तथा नदृष्टो भवान् । मु धे दानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । राजन् । भवता - त्वया । श्रुतम् - आकर्णितंकिमितिकाकुः । त्वया । अत्रभवी - पूज्यामाळविका । यथा - येनप्रकारेण । दृष्टा - विलोकिता । तथा - तेनप्रकारेण । भवान् । नदृष्टोननुकिं - नावलोकितएवकिम् । इदानीम् - अद्य । मञ्जूषा - पेटिका । रत्नभाण्डम् - रत्नधानमिव । मुधा - व्यर्थमेव । यौवनगर्वं - तारुण्याभिमानम् । वहसि - धरसि ॥

---

राजा ॥ सखे ! कुतूहलवानपि निसर्गशालीन स्त्रीजनः ॥ पश्य ॥

श्लो ॥ कार्त्स्न्येन निर्वर्णयितुंच रूप
मिच्छन्ति तत्पूर्वसमागमानाम् ।
नतु प्रिये ष्वायतलोचनानां
समग्रवृत्तीनि विलोचनानि ॥६६॥

---

राजेति ॥ राजा । प्राह । सखे - सुहृद्वौतम । स्त्रीजनः - यो

षिज्जनः । कुतूहलवान्-सम्यग्द्रष्टुं कौतूहल युक्तोऽपि । निसर्गशालीनः-निसर्गेण-स्वभावेन । शालीनः- अधृष्टः । सलज्जइत्यर्थः । नि ॥ स्यादधृष्टेतुशालीन इत्यमरः ॥ पश्यच - विलोकय । कार्त्स्न्येनेति ॥ आयतलोचनानां - दीर्घनयनानाम् । स्त्रीणामितिशेषः । तत्पूर्वसमागमानाम्-तत्प्रथमसमावेशानांपुंसां । रूपं - आकृतिं । कार्त्स्न्येन - साकल्येन । निर्वर्णयितुम्-द्रष्टुम् । इच्छन्ति - वाञ्छन्ति । किंतु । प्रियेषु - इष्टेषु जनेषु विषये । विलोचनानि - नेत्राणि । समग्रवृत्तीनि - सम्पूर्णव्यापाराणि । न - नभवन्ति । व्रीडयेतिशेषः ॥ स्वेष्टजनालोकनविषये औत्सुक्येसत्यपि समग्रतया स्त्रियो नपश्यन्ति लज्जाशीलत्वा दित्याशयः ॥

---

माळ ॥ हळा का एसा पासपरिवत्तिदवअणेण भट्टिणा सिणिद्धाए दिट्ठीए णिज्झाआदि । छा ॥ हला कैषा पार्श्वपरिवर्तितवदनेन भर्त्रा स्निग्धया दृष्ट्या निध्यायते ॥

---

माळविकेति ॥ माळविका । वक्ति । हला - सखिवकुलावळिके । पार्श्वपरिवर्तितवदनेन - पक्षभागप्रसारिताननेन । भर्त्रा - राज्ञा । स्निग्धया - प्रेमसहितया । दृष्ट्या - विलोकनेन । निध्यायते - वीक्ष्यते । एषा - दृश्यमाना । का - कावाभवेत् ॥

---

वकुला ॥ णं इअं पासगदा इरावदी । छा ॥ नन्वियं पार्श्वग तेरावती ॥

---

वकुलावळिकेति ॥ वकुलावळिका । वक्ति । ननु - माळविके । पार्श्वगता - पक्षभागस्थिता । इयम् - एषा । इरावती - एतन्नाम्नी राज्ञो द्वितीयपत्नी ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । राजन् । त्वम् । इदानीं - संप्रति । अनुनयसज्जः - सांत्वनोद्युक्तः । भव - स्याः ॥

---

माळ ॥ अज्जगोदमो एत्थएव्व सेवदि णं । इति पुनः स्थानान्तराभिमुखो भवितु मिच्छति ।छा॥ आर्यगौतमः अत्रैव सेवत एनाम् ... ॥

---

माळविकेति ॥ माळविका । वक्ति । आर्यगौतमः - पूज्यः गौतमनामाविदूषकः । अत्र - अस्मिन्नेवप्रदेशे । एनाम् - इरावतीं । सेवते - अनुसरति । इति - एवमुक्त्वा । पुनः - भूयः । स्थानान्तराभिमुखीभवितुं - स्थलान्तरदर्शनोन्मुखीभवितुम् । इच्छति - वाञ्छति ॥

---

वकुला ॥ माळविकां रुद्ध्वा णहिणहि । कुवि दादाणिं तुमं छा ॥ नहिनहि कुपि तेदानीं त्वम् ॥

---

वकुलावळिकेति ॥ वकुलावळिका । माळविकां । रुद्ध्वा- निवार्य । ब्रूते । त्वम् । इदानीम् - अद्य । कुपितानहि- अमर्षनगतासिहि । संभ्रमाद् द्विरुक्तिः ॥

---

माळ ॥ जदि चिरं कुविदं एव्व मं मंतेसि एस पच्चाणीअदु कोवो। छा ॥ यदि चिरं कुपितामेव मां मन्त्रयसि एष प्रत्यानीयतां कोपः ॥

---

माळविकेति ॥ माळविका । वक्ति । सखि वकुलावळिके । त्वं । चिरं - चिरकालं । मां । कुपितां - कोपयुक्तामेव । मन्त्रयसियद - मन्येसेचेत् । तर्हि । एषः - अयं । कोपः - रोषः । प्रत्यानीय

ताम् - अपनीतोभवतु ॥

---

राजा ॥ उपेत्य ।

श्लो ॥ कुप्यसि कुवलयनयने !
चित्रार्पितचेष्टया कथय किमिदं मे ।
ननु तव साक्षा दय मह
मनन्यसाधारणो दासः ॥६८॥

---

राजेति ॥ राजा । उपेत्य - समीपम्प्राप्य । प्राह । कुप्यसीति ॥ कुवलयनयने - हेउत्पलाक्षि । मे - मम । चित्रार्पितचेष्टया - आलेखयलिखितव्यापारेण । कुप्यसि - रोषम्प्राप्नोषि । किमिदं - एतत्किमर्थं । ननु - भोमाळविके । अयमहम् - एषोऽहं । साक्षात् - स्वरूपतः । तव । अनन्यसाधारणः - अनितरसामान्यः । दासः - भृत्योऽस्मि ॥

---

वकुला ॥ जेदु जेदु भट्टा । छा ॥ जयतु जयतु भर्ता ॥

---

वकुलावळिकेति ॥ वकुलावळिका । वक्ति । भर्ता - राजा । जयतु - सर्वोन्नत्येन वर्तताम् । आदराद्विरुक्तिः ॥

---

माळ ॥ आत्मगतम् । कहं चित्तगदो भट्टा मए असूइदो सव्रीडवचन मञ्जलिं करोति । छा ॥ ... कथं चित्रगतो भर्ता मया सूयितः ... ॥

---

माळविकेति ॥ माळविका । आत्मगतम् - स्वमात्रावगतंयथा तथा । वदति । चित्रगतः - आलेखयलिखितः । भर्ता - राजा । मया । कथम् - केनप्रकारेण । असूयितः - अक्षमाविषयीकृतः । इत्युक्त्वा ।

सव्रीडवचनम् - सलज्जवाक्यंयथातथा । अञ्जलिं - निकुञ्जसंयुक्तपाणिद्वयम् । नि ॥ पाणि निकुञ्जः प्रसृति स्तौयुता वञ्जलिःपुमा नित्यमरः ॥ करोति - घटयति ॥

---

राजा मदनकातर्यं रूपयति ॥

---

राजेति ॥ राजा । मदनकातर्यं - मदनेन - मन्मथव्यथया । कातर्यम् - अधैर्यं । रूपयति - अभिनयति ॥

---

विदू ॥ किं भवं उदासीणोविअ दीसदि । छा ॥ किं भवानुदासीनइव दृश्यते ॥

---

विदूषकइति ॥ विदूषकः । कथयति । भवान् । उदासीनः - तटस्थइव । किं - किमर्थं । दृश्यते - प्रेक्षयते ॥

---

राजा ॥ अविश्वसनीयत्वा त्सख्या स्ते ॥

---

राजेति ॥ राजा । प्राह । गौतम । ते - तव । सख्याः - मित्रभूतायाः मालविकायाः । अविश्वसनीयत्वात् - विस्रम्भानर्हत्वात् । तूष्णींस्थितोहमित्यनुषज्यते ॥

---

विदू ॥ अत्तभोदीए कहं तुह अविस्सासो । छा ॥ अत्रभवत्याः कथं त वाविश्वासः ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । तव । कर्तरिषष्ठी । अत्रभवत्याः - पूज्यांमालविकांप्रति । कर्मणिषष्ठी । कथम् - केनत्राहेतुना । अविश्वासः - विश्वासाभावः । भवेदितिशेषः ॥

---

राजा ॥ श्रूयताम् ॥

श्लो ॥ पथि नयनयो स्स्थित्वास्थित्वा तिरोभवति क्षणा
त्सरति सहसा बाह्वोर्मध्यं गतापि सखी तव ।
मनसिजरुजोक्लिष्ट स्यैवं समागममायया
कथमपि सखे! विस्रब्धं स्या दिमांप्रति मे मनः ॥६९

---

राजेति ॥ राजा। प्राह। श्रूयताम् - आकर्ण्यताम् । त्वयेति शेषः। पथीति ॥ सखे - हे गौतम । नयनयोः - नेत्रयोः । पथि - मार्गे। स्थित्वास्थित्वा - वर्तित्वावर्तित्वा । क्षणात् - क्षणमात्रेण । तिरोभवति - अन्तर्दधाति । तव । सखी - मित्रभूतामाळविका । बाह्वोः - भुजयोः । मध्यम् - अन्तरम्। गता - प्राप्तापि। सहसा - अतर्कितंयथातथा । सरति - बहिर्गच्छति । समागममायया - समात्रेशप्रतारणेन । एवम् - उक्तरीत्या । मनसिजरुजा - अनङ्गपीडया । क्लिष्टस्य - संक्लेशितस्य । मे - मम । मनः - चेतः । इमां - एनांमाळविकाम्प्रति । कथमपि - केनवाहेतुना । विस्रब्धम् - विश्वासयुक्तम्। स्यात् - भवेत् ॥

---

वकुला ॥ सहि! बहुसोकिळ भट्टा विप्पळद्धो । ता अत्ता विस्ससणीओ करीअदु । छा ॥ सखि! बहुशःकिल भर्ता विप्रलब्धः । तदात्मा विश्वसनीयः क्रियतां ॥

---

वकुलावळिकेति ॥ वकुलावळिका । वक्ति । सखि - हेमाळविके । भर्ता - राजा । बहुशः - अनेकवारम् । विप्रलब्धः - वञ्चितः किल । त्वयेतिशेषः । तत् - तस्मात् । आत्मा - स्वं । विश्वसनीयः - विश्वासार्हः - क्रियतां - विधीयतां ॥

---

माळ ॥ महउण मंदभाग्गाए सिविणअसमाअमोवि भट्टि

णो दुल्लहो आसि। छा॥ ममपुन मन्दभाग्याया स्स्वप्नस मागमोऽपि भर्तु र्दुर्लभ आसीत्॥

---

माळविकेति॥ माळविका। वदति। सखि! मन्दभाग्यायाः - स्वल्पभागधेयायाः। ममपुनः। भर्तुः - राज्ञः। समागमः - समावेशोऽपि। स्वप्नः - स्वापतुल्यस्सन्। दुर्लभः - दुष्प्रापः। आसीत्-अभूत्॥

---

वकुला॥ एदु भट्टा देहि से उत्तरं। छा॥ एतु भर्ता देह्यस्या उत्तरम्॥

---

वकुलावळिकेति॥ वकुलावळिका। वक्ति। भर्ता - राजा। एतु - आगच्छतु। अस्याः - माळविकायाः। उत्तरं - प्रतिवाक्यम्। देहि - प्रयच्छ। त्वमित्यर्थाल्लभ्यते॥

---

राजा॥

श्लो॥ उत्तरेणकि मात्मैव पञ्चबाणाग्निसाक्षिकम्।
तव,सख्यै मया दत्तो नसेव्य स्सेविता रहः॥७०॥

---

राजेत्यादि॥ राजा। प्राह। उत्तरेण - प्रतिवाक्येन। किं - किंप्रयोजनम्। पञ्चबाणाग्निसाक्षिकम् - पञ्चबाणः - मन्मथएव। अग्निः - वह्निः। सन्तापकत्वात्। सएव। साक्षीयत्रत यथातथा। मया। आत्मा - अहमेव। तव। सख्यै - सुहृद्भूतायैमाळविकायै। दत्तः - समर्पितः। रहः - एकान्ते। सेविता - सेवकः। अस्मीतिशेषः। नसेव्यः - सेवनीयोनास्मीत्यर्थः॥

---

वकुला॥ अणुगिहीदम्हि। छा॥ अनुगृहीतास्मि॥

---

वकुलावळिकेति ॥ वकुलावळिका। वक्ति। अनुगृहीता - अभ्युपपन्नास्मि ॥

---

विदू ॥ परिक्रम्य ससम्भ्रमम्। वउळावलिए असोअपल्लवाइं अहिळंघइदुं इच्छदि हरिणो। एहि णिवारेम णं।... छा ॥ वकुलावळिके! अशोकपल्लवा न्यभिलंघयितु मिच्छति हरिणः। एहि निवारयाव एनम् ॥

---

विदूषकइति ॥ विदूषकः। परिक्रम्य - किञ्चिद्विवृत्य। ससम्भ्रमम् - सत्वरंयथातथा। ब्रूते। हेवकुलावळिके। हरिणः - कुरङ्गः। अशोकपल्लवानि - वकुलकिसलयानि। नि ॥ वकुलो वञ्जुलोऽशोक इत्यमरः ॥ अभिलंघयितुं - आक्रमितुं। भक्षणार्थमित्याशयः। इच्छति - वाञ्छति। एनं - हरिणं। निवारयावः - अपसारयावः। एहि - आगच्छ ॥

---

वकुला ॥ तह। इतिप्रस्थिता। छा ॥ तथा ... ॥

---

वकुलावळिकेति ॥ वकुलावळिका। वक्ति। तथा - तेनप्रकारेण। अस्त्वितिशेषः। इति - एवमुक्त्वा। प्रस्थिता - निर्गता ॥

---

राजा ॥ एवमे वास्मिन् रक्षणी येऽविलम्बितेन भवितव्यं॥

---

राजेति ॥ राजा। प्राह। गौतम। अस्मिन् - एतस्मिन्। रक्षणीये - परिरक्षितव्ये। एवम् - अनेनप्रकारेणैव। अविलम्बितेन - अनालस्येन। भवितव्यम् - भाव्यम्। त्वयेतिशेषः ॥

---

विदू ॥ एव्वंपि गोदमो संदिसीअदि । छा ॥ एवमपि गौतम स्संदिश्यते ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । गौतमः । एवम् - अनेनप्रकारेणापि । सन्दिशयते - नियुजयतइतिकाकुः ॥

---

वकुला ॥ अज्ज ! गोदम ! अहं अप्पआसे चिट्ठामि । तुमं दुवाररक्खओ होहि । छा ॥ आर्य ! गौतम ! अह मप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव ॥

---

वकुलावळिकेति ॥ वकुलावळिका । वदति । आर्य - माननीय । गौतम । अहम् । अप्रकाशे - निगूढस्थाने । तिष्टामि - वसामि । त्वं । द्वाररक्षकः - प्रतीहारः । भव - एधि ॥

---

विदू ॥ जुज्जदि । छा ॥ युज्यते ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । युजयते - युक्तमेव ॥

---

निष्क्रान्ता वकुलावळिका ॥

---

निष्क्रान्तेति ॥ वकुलावळिका । निष्क्रान्ता - निर्गता ॥

---

विदू ॥ इमंदाव फटिअकंभं संसिदो भोमि । तथा कृत्वा अहो सुहप्फरिसदा सिळाविसेसस्स । इतिनिद्रायते । छा ॥ इमं तावत् स्फटिकस्तम्भं संश्रितो भवामि ... अहो सुखस्पर्शता शिलाविशेषस्य ...॥

---

विदूषकइति ॥ विदूषकः । वक्ति । तावत् - इदानीं । इमं - पुरोवर्तिनम् । स्फटिकस्तम्भम् - स्फटिकशिलास्तम्भं । संश्रितः - आश्रितः । भवामि - अस्मि । तथाकृत्वा - स्फटिकस्तम्भमाश्रित्य । वक्ति । शिलाविशेषस्य - स्फटिकोपलस्य । सुखस्पर्शता - शर्मकरस्पर्शवत्त्वम् । अहो - आश्चर्यकरी । इति - एवमुक्त्वा । निद्रायते - निद्राम्प्राप्नोति ॥

---

मालविका ससाध्वसं तिष्ठति ॥

---

मालविकेति ॥ मालविका । ससाध्वसम् - सभयंयथातथा । तिष्ठति - वर्तते ॥

---

राजा ॥

श्लो ॥ विसृज सुन्दरि ! सङ्गमसाध्वसं
तव चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां
त्वं मतिमुक्तलताचरितं मयि ॥७१॥

---

राजेति ॥ राजा । प्राह । सुन्दरि - हे लावण्यवतिमालविके । चिरात्प्रभृति - बहुकालमारभ्य । तव । प्रणयोन्मुखे - प्रार्थनाभिमुखे । सहकारताम् - रसालपादपत्वञ्च । गते - प्राप्ते । मयि । त्वम् । अतिमुक्तलताचरितं - माधवीलतासाम्यम् । आश्लेषादिनेतिशेषः । परिगृहाण - स्वीकुरुष्व । सङ्गमसाध्वसम् - मत्समागमप्रयुक्तभयम् । विसृज - त्यज ॥

---

माल ॥ देवीभआदो अत्तणोवि पिअं कादुं णपारेमि !

छा ॥ देवीभयाद्वात्मनोऽपि प्रियं कर्तुं नपारयामि ॥

---

माळविकेति ॥ माळविका । वदति । राजन् । देवीभयात्-पट्टमहिषीभीत्या । आत्मनः-स्वस्यापि । प्रियं-प्रीतिं । कर्तुं-विधातुम् । नपारयामि-नशक्नोमि ॥

---

राजा ॥ **नभेतव्यं नभेतव्यं ॥**

---

राजेति ॥ राजा । प्राह । माळविके । नभेतव्यम्-साध्वस नकर्तव्यम् । त्वयेतिशेषः । आदराद्द्विरुक्तिः ॥

---

माळ ॥ सोपालम्भम् । **जो णभाअदि सो मए भट्टिणीदंसणे दिठ्ठसमत्थो भट्टा । ... छा ॥ यो नबिभेति स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्ता ॥**

---

माळविकेति ॥ माळविका । सोपालम्भम्-सोल्लुण्ठनंयथातथा । वदति । यः-जनः । नबिभेति-भीतिंनप्राप्नोति । सः-प्रसिद्धः । भर्ता-राजा । भट्टिनीदर्शने-इरावतीविलोकने । मया । दृष्टसामर्थ्यः-परीक्षितशक्तिः । किमुतान्येषामितिभावः ॥

---

राजा ॥

**श्लो ॥ दाक्षिण्यंनाम बिम्बोष्ठि ! नायकानां कुलव्रतम् ।**

**तन्मे दीर्घाक्षि ! ये प्राणा स्ते त्वदाशानिबन्धनाः ॥**

**तदनुगृह्यतां चिरानुरक्तोऽयञ्जनः ।** इति संश्लेष मुपजनयति ॥

---

राजेति ॥ राजा । प्राह । बिम्बोष्ठि-बिम्बिकाफलारुणरदनच्छदे । नायकानाम्-अधिपानां । दाक्षिण्यम्-सर्वदयितासुतुल्यवृत्तित्वं । कुलव्रतंनाम-अवश्यरक्षणीयनियमोहि । नामेतिप्रसिद्धौ । तथापि । तत्-तस्मात् । दीर्घाक्षि-हे विशाललोचने । मे-मम । ये । प्राणाः-असवः । सन्तीतिशेषः । ते प्राणाः । त्वदाशानिबन्धनाः-त्वदाकाङ्क्षा

वलम्बनः । तत् - तस्मात् । चिरानुरक्तः - अनेककालप्रभृत्यासक्तः । अयञ्जनः - एषजनः । अनुगृह्यताम - अभ्युपपद्यताम् । स्वीक्रियतामित्याशयः । इति - एवमुक्त्वा । संश्लेषम् - परीरम्भम् । उपजनयति - आरभते ॥

---

मालविका नाट्येन परिहरति ॥

---

मालविकेति ॥ मालविका । नाट्येन - अभिनयेन । परिहरति - आश्लेषान्निवारयति । राजानमित्यध्याहारः ॥

---

राजा ॥ रमणीयःखलु नवाङ्गनानां मदनविषयावतारः । एषाहि ॥

श्लो ॥ हस्तं कम्पयते रुणद्धि रशना व्यापारलोलांगुळी
स्स्वौ हस्तौ नयति स्तनावरणता मालिंग्यमानाबलात् ।
पातुं पक्ष्मलनेत्र मुन्नमयत स्साचीकरो त्याननं
व्याजेना प्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥७३॥

---

राजेति ॥ राजा । प्राह । नवाङ्गनानाम् - नूतनवधूनाम् । मदनविषयावतारः - मदनविषयेषु - मन्मथकृत्येषु । अवतारः - प्रवेशः । रमणीयःखलु - मनोहरोहि - एषेत्यादि ॥ हि - यस्मात् । एषा - मालविका । हस्तम् - करम् । कम्पयते - चलयते । रशनाव्यापारलोलांगुळीः । रशनायां - मेखलायां । व्यापारे - तद्ग्रन्थिमोचनरूपचेष्टायां । लोलांगुळीः - औत्सुक्येनव्यग्रांगुळीः । रुणद्धि - प्रतिबध्नाति । बलात् - हठात । आलिङ्ग्यमाना - आश्लिष्यमाणासती । स्वौ - आत्मीयौ । हस्तौ - करौ । स्तनावरणताम् - पयोधराच्छादनताम् । नयति - प्रापयति । पक्ष्मलनेत्रम् - प्रशस्तपक्ष्मयुक्तनयनम् । आननम्-वदनम् । पातुं - चुम्बितुम् । उन्नमयतः - उत्क्षिपतः । ममेतिशेषः । साचीकरोति - तिर्यक्प्रसारयति ।

अत: । व्याजेन - छलेनापि । मे - मम । अभिलाषपूरणसुखम् - अभिलाषपूरणेन - कामनापूर्त्यायत्सुखंतत् । निर्वर्तयति - निष्पादयत्येव ॥

---

ततः प्रविशत इरावती निपुणिकाच ॥

---

ततइति ॥ ततः - अनन्तरम् । इरावती - एतन्नाम्नीराज्ञोद्वितीयजाया । निपुणिका - एतन्नाम्नीतत्परिचारिकाच । प्रविशति - रङ्गस्थलम्प्राप्नोतीति प्रत्येकान्वय: ॥

---

इरा ॥ हंजे णिउणिए ! सच्चं तुमं परिगदत्था चंदिआए । समुद्दगेहकाळिंदसइदो अज्जगोदमो दिठ्ठोत्ति । छा ॥ चेटि ! निपुणिके ! सत्यं त्वं परिगतार्था चन्द्रिकया । समुद्रगृहकालिन्दशयित आर्यगौतमो दृष्टइति ॥

---

इरावतीति ॥ इरावती । वदति । चेटि ! निपुणिके ! त्वम् । चन्द्रिकया - एतन्नाम्न्यापरिचारिकया । सत्यम् - तथ्यमेव । परिगतार्था-ज्ञातार्था । किमिति । आर्यगौतमः - पूज्यगौतमः । समुद्रगृहकालिन्दशयितः - समुद्रगृहकस्य - जलयन्त्रगेहस्य । अलिन्दे - द्वारपार्श्वस्थवेदिकायां । शयितः - सुप्तस्सन् । दृष्टः - मयाविलोकितइति ॥

---

निपु ॥ अण्णहा कहं भट्टिणीए विण्णवीअदि । छा ॥ अन्यथा कथं भट्टिन्या विज्ञाप्यते ॥

---

निपुणिकेति ॥ निपुणिका । वक्ति । भट्टिन्या: - देव्यास्तव । अन्यथा - अन्यप्रकारेण । कथम् - केनहेतुना । विज्ञाप्यते - निवेद्यते । मयेतिशेषः ॥

---

इरा ॥ तेणहि ताहिंएव्व गच्छम्ह संसआदो मुत्तं पिअव अस्सं पुच्छिदुंच । छा ॥ तेनहि तत्रैव गच्छाव संशया न्मुक्तं प्रियवयस्यं प्रष्टुञ्च ॥

---

इरावतीति ॥ इरावती । वक्ति । तेनहि - तेनहेतुना । संशया न्मुक्तम् -प्राणसन्देहमोक्षितम् । सू ॥ अपेतापोढमुक्तेत्यलुक् । प्रियवयस्य म् - इष्टसखम् । गौतममितिशेषः । प्रष्टुम् - कुशलप्रश्नंकर्तुंच । चकाराद् ष्टुञ्चेत्यर्थः । तत्र - तस्मिन्नेवप्रदेशे । मातरिप्रहरतीत्यादि वद्द्वितीयार्थेस प्तमी । गच्छाव - याव ॥

---

निपु ॥ सावसेसंविअ भट्टिणीएँ वअणं । छा ॥ सावशेष मिव भट्टिन्या वचनम् ॥

---

निपुणिकेति ॥ निपुणिका । वक्ति । भट्टिन्याः - देव्याः । वच नम् - वाक्यम् । सावशेषम् - किञ्चिदवशिष्टमिव । स्थितमितिशेषः । पूर्ववाक्येप्रष्टुंचेति चकारप्रयोगादित्याशयः ॥

---

इरा ॥ अण्णंच । चित्तगदं अज्जउत्तं पसाददइदुं । छा ॥ अन्यच्च । चित्रगत मार्यपुत्रं प्रसादयितुम् ॥

---

इरावतीति ॥ इरावती । ब्रवीति । निपुणिके । अन्यत् - इतर प्रयोजनञ्च । अस्तीतिशेषः । तत्किमित्युक्ते । चित्रगतम् - आलेख्याल खितम् । आर्यपुत्रम् - राजानम् । प्रसादयितुं - प्रसन्नंकर्तुं । गच्छावेतिपू र्वेणानुषङ्गः ॥

---

निपु ॥ अह दाणीं कहंणु भट्टा एव्वं अणुणीअदि [ ज

इ दाणिं भट्टा पच्चक्खदो अणुणीअदि ता को दोसो ] । छा ॥ अ थेदानीं कथंनु भ तैव मनुनीयते । पाठान्तरे । यदि भर्ता प्र त्यक्ष तोऽनुनीयते त त्को दोषः ॥

---

निपुणिकेति ॥ निपुणिका । वक्ति । अथेतिप्रश्ने । इदानीं - अद्य । भर्ता - राजा । एवम् - अनेनप्रकारेण । कथंनु - कयावारीत्या । अनुनीयते - प्रसाद्यते । पाठान्तरमपि व्याखयायते । भर्ता - राजा । प्रत्यक्षतः - साक्षात् । यद्यनुनीयते - प्रसाद्यतेचेत् । तत् - तर्हि । कोदोषः - कावाहानिः ॥

---

इरा ॥ मुद्धे ! जारिसो चित्तगदो तारिसोएव्व अण्णसंकंतहिअओ अज्जउत्तो । केवळं उवआरादिक्कमं पमज्जिदुं अअं आरंभो । छा ॥ मुग्धे ! यादृश श्चित्रगत स्तादृशए वान्य सङ्क्रान्तहृदय आर्यपुत्रः । केवल मुपचारातिक्रमं प्रमार्जयितु मय मारम्भः ॥

---

इरावतीति ॥ इरावती । वदति । मुग्धे - मूढ । नि ॥ मुग्ध स्सुन्दरमूढयो रितिविश्वः ॥ चित्रगतः - आलेखयलिखितः । आर्यपुत्रः - राजा । यादृशः । अन्यसङ्क्रान्तहृदयः - अन्यासक्तचित्तः । आर्यपुत्रः - राजापि । तादृशः - तत्तुल्यएव । किंतु । उपचारातिक्रमम् - पादपतन रूपमत्सेवनोल्लंघनं । प्रमार्जयितुंकेवलम् - अपनोदितुमेव । अयम् - एषः । आरम्भः - उपक्रमः । अन्यसङ्क्रान्तहृदयस्य साक्षादनुनयकरणायोग्यत्वादेवं क्रियतइतिभावः ॥

---

निपु ॥ इदोइदो भट्टिणी । छा ॥ इतइतो भट्टिनी ॥

---

निपुणिकेति ॥ निपुणिका । वक्ति । भट्टिनी - राज्ञी । इतइतः - अनेनानेनमार्गेण । आगच्छत्वित्यध्याहारः ॥

---

उभे परिक्रामतः ॥

---

उभेइति ॥ उभे - इरावतीनिपुणिके । परिक्रामतः - गच्छतः ॥

---

प्रविश्यचेटी ॥ जेदुजेदु भट्टिणी । भट्टिणि ! देवी भणादि । ण एसो मह मस्सरस्स कालो तव बहुमानं वढ्ढइदुं । इअं वअस्सिआएसह णिअळबंधणे किदा मालविआ । जइ अणुमण्णोसि अज्जउत्तंपि तवकिदे विण्णावइस्सं । छा ॥ ... जयतुजयतु भट्टिनी । भट्टिनि ! देवी भणति । नैष मे मत्सरस्य काल स्तव बहुमानं वर्धयितुम् । इयं वयस्यिकयासह निगळबन्धने नीता माळविका । य द्यनुमन्यसे आर्यपुत्रमपि तवकृते विज्ञापयिष्यामि ॥

---

प्रविश्येति ॥ चेटी - काचनपट्टमहिषीपरिचारिका । प्रविश्य - प्राप्य । वक्ति । भट्टिनी - राज्ञी । जयतु - सर्वोत्कर्षेण वर्तताम् । आदराद्द्विरुक्तिः । भट्टिनि - राज्ञि इरावति । देवी - पट्टमहिषी । भणति - वदति । किमिति । तव । बहुमानम् - सत्कारं । वर्धयितुं - वृद्धिंप्रापयितुम् । मे - मम । मत्सरस्य - द्वेषस्य । एषः - अयम् । कालः - समयः । न - नभवति । इयम् - एषा । माळविका । वयस्यिकया - सख्या वकुलावळिकयासह । निगळबन्धने - शृंखलाबन्धे । नीता - प्रापिता । त्वं । यद्यनुमन्यसे - अङ्गीकरोषिचेत् । आर्यपुत्रम् - राजानमपि । तव

कृते - त्वद्वारा । विज्ञापयिष्यामि - निवेदयिष्यामि ॥

---

इरा ॥ णाअरिए ! विण्णावेहि देविं। काओ वअं भट्टिणीं णिओजेदुं। परिअणणिग्गहेण मइ दंसिदो अणुग्गहो। कस्सवा पसाएण अअं जणो वड्ढदित्ति। छा ॥ नागरिके ! विज्ञापय देवीम्। का वयं भट्टिनीं नियोजयितुं। परिजननिग्रहेण मयि दर्शितोऽनुग्रहः कस्यवा प्रसादे नायञ्जनो वर्धतइति ॥

---

इरावतीति ॥ इरावती । वक्ति । हे नागरिके - एतन्नामिकेदेवीचेटि । देवीम् - पट्टमहिषीम् । विज्ञापय - निवेदय । भट्टिनीं - देवीम् । नियोजयितुं - आज्ञप्तुं । वयं । काः - अनर्हाइत्यर्थः । परिजननिग्रहेण - परिचारिकाजनशिक्षणेन । मयि । अनुग्रहः - प्रसादः । दर्शितः - प्रकाशितः । अयञ्जनः - एषजनः । कस्यवाजनस्य । प्रसादेन - अनुग्रहेण । वर्धते - वृद्धिंप्राप्नोतीति पूर्वेणान्वयः ॥

---

चेटी ॥ तह। इतिनिष्क्रान्ता। छा ॥ तथा ... ॥

---

चेटीति ॥ चेटी । वक्ति । तथा - तेनप्रकारेण । करोमीतिशेषः । इति - एवमुक्त्वा । निष्क्रान्ता - याता ॥

---

निपु ॥ परिक्रम्यावलोक्यच। एस दुवारे समुद्दगेहकस्स विपणिगदोविअ वुसहो गोदमो आसीणोएव्व णिद्दाअदि ...। छा ॥ एष द्वारे समुद्रगृहकस्य विपणिगतइव वृषभो गौतम आसीनएव निद्रायते ॥

---

निपुणिकेति ॥ निपुणिका । परिक्रम्य - किञ्चिद्गत्वा । अवलो

कथ - दृष्ट्वाच । वक्ति । हे भट्टिनि । एषगौतमः - अयंविदूषकः । समुद्रगृहकस्य - जलयन्त्रगेहस्य । द्वारे - प्रतीहारे । विपणिगतः - पण्यवीथिस्थः । वृषभः - उक्षेव । आसीनः-निषण्णएव । निद्रायते - स्वपिति ॥

---

इरा ॥ किंणक्खु अच्चाहिदं। सावसेसोविअ विसविआरो भवे। छा ॥ किंनुख ल्वत्याहितम्। सावशेषइव विषविकारो भवेत् ॥

---

इरावतीति ॥ इरावती । वदति । किंनुखल्वत्याहितं - महाभयंकिंत्रास्यादितिकाकुः । नि ॥ अत्याहितं महाभीतिः कर्मजीवा नपेक्षचेत्यमरः॥ कुतः । विषविकारः - गरळविकृतिः । सावशेषः - किञ्चिदवशिष्टस्सन् । भवेत् - स्यादिव ॥

---

निपु ॥ पसण्णमुहवण्णो दीसदि । अविअ धुवसिद्धिणा चिइस्सिदो । ता से असंकणिज्जं पावं । छा ॥ प्रसन्नमुखवर्णो दृश्यते । अपिच ध्रुवसिद्धिना चिकित्सितः । त द स्याशंकनीयं पापम् ॥

---

निपुणिकेति ॥ निपुणिका । वक्ति । राज्ञि । गौतमः । प्रसन्नमुखवर्णः - निर्मलाननकान्तिः । दृशायते - प्रेक्षयते । अपिच - किञ्च । ध्रुवसिद्धिना - एतन्नामकविषवैद्येन । चिकित्सितः - कृतरोगप्रतीकारः । तत् - तस्मात्कारणात् । अस्य - गौतमस्य । पापम् - मृत्युदोषः । अशंकनीयम् - अविचारणीयम् ॥

---

विदू ॥ उत्स्वप्नायते । भोदि ! मालविए । ... छा ॥ भवति! माळविके ॥

---

विदूषकइति ॥ विदूषकः । उत्स्वप्नायते - स्वप्नेकानिचिद्वचनानिप्रलपति । किमिति । भवति - पूजये । मालविके - एतन्नाम्निबालिके । इति ॥

---

निपु ॥ सुदं भट्टिणीए । कस्सवा एसो अत्तणीणो [ एस कितवो ] अब्भवहारिअसंबंधापेक्खी किदग्घो । इदो सव्वं कालं सोत्थिवाअणमोदएहिं कुक्खिं पुरिअ संपदं मालविअं सिविणावेदि । छा ॥ श्रुतं भट्टिन्या । कस्यवैष आत्मनीनः । पा ॥ एष कितवः ॥ अभ्यवहार्यसम्बन्धापेक्षी कृतघ्नः । इत स्सर्वं कालं स्वस्तिवाचनिकमोदकैः कुक्षिं पूरयित्वा साम्प्रतं मालविकां स्वप्नायते ॥

---

निपुणिकेति ॥ निपुणिका । वक्ति । भट्टिन्या - राज्ञ्या । श्रुतम् - आकर्णितंकिम् । गौतमवाक्यमितिशेषः । एषः - गौतमः । कस्यवाजनस्य । आत्मनीनः - आत्मनेहितः । नकस्यापीत्यर्थः । पाठान्तरे । कितवः - धूर्तः । एषः - विदूषकः । शिष्टंपूर्ववत् । किंतु । अभ्यवहार्यसम्बन्धापेक्षी - भक्षयानुबन्धाभिलाषी । कृतघ्नः - विश्वासघातुकः । इतः - एतस्माद्राज्ञः । स्वस्तिवाचनिकमोदकैः - स्वस्तिवाचनप्रयोजनकभक्षयविशेषैः । सर्वंकालं - सर्वस्मिन्समये । कुक्षिम् - गर्भं । पूरयित्वा - पूर्णंकृत्वा । साम्प्रतम् - अधुनामालविकां । स्वप्नायते - स्वप्नेपश्यति ॥

---

विदू ॥ इरावदीं अदिक्कमंती होहि । छा ॥ इरावती मतिक्रामन्ती भव ॥

---

विदूषकइति ॥ विदूषकः । स्वमेवदति । इरावतीम् । अतिक्रामन्ती - अतिक्रम्य वर्तमाना । भव - स्याः ॥

---

निपु ॥ एदं अच्चाहिदं । भुअंगभीअं बम्हबंधुं इमिणा भुअंगकुडिळेण अत्तणो दण्डकठ्ठेण अंतरिदा ताडइस्सं । छा ॥ एत दत्याहितम् । भुजङ्गभीतं ब्रह्मबन्धु मनेन भुजङ्गकुटिलेनात्मनो दण्डकाष्ठे नान्तरिता ताडयिष्यामि ॥

---

निपुणिकेति ॥ निपुणिका । ब्रवीति । एतदत्याहितं - किमिदमसाध्वसंकृत्यं । भुजङ्गभीतम् - सर्पत्रस्तम् । ब्रह्मबन्धुम् - ब्राह्मणाधमं गौतमम् । भुजङ्गकुटिलेन - आशीविषवद्वक्रेण । आत्मनः - स्वस्य । दण्डकाष्टेन - हस्तलगुडेन । अन्तरिता - स्तम्भाच्छादितासती । ताडयिष्यामि - पतितंयथातथा प्रहरिष्यामि ॥

---

इरा ॥ अरिहदि किदग्घो सप्पदंसणं । छा ॥ अर्हति कृतघ्न स्सर्पदंशनम् ॥

---

इरावतीति ॥ इरावती । वक्ति । कृतघ्नः - अविश्वासीगौतमः । सर्पदंशनं - उरगक्षतम्प्रति । अर्हति - योग्योभवति ॥

---

निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति ॥

---

निपुणिकेति ॥ निपुणिका । विदूषकस्य - गौतमस्य । उपरि - देहोपरि । दण्डकाष्टम् - करलगुडम् । पातयति - क्षेपयति ॥

---

विदू ॥ सहसा प्रबुध्य । अविहाअविहा । दव्वीकरो मे उ

वरि परिपडिदो। ... छा ॥ अपिहाअपिहा। दर्वीकरो मे उप रि परिपतितः ॥

---

विदूषकइति ॥ विदूषकः। सहसा - सत्वरम्। प्रबुध्य - विनिद्रोभूत्वा। ब्रूते। अपिहेत्याक्रोशे - साध्वसाद्विरुक्तिः। मे - मम। उपरि - शरीरोपरि। दर्वीकरः - व्याळः। परिपतितः - निपतितः ॥

---

राजा ॥ सह सोपसृत्य। नभेतव्यं नभेतव्यम् ॥

---

राजेति ॥ राजा। सहसा - शीघ्रम्। उपसृत्य - समीपम्प्राप्य। प्राह। हेगौतम। नभेतव्यं -भयंनकर्तव्यम्। आदराद्विरुक्तिः ॥

---

माळ ॥ अनुसृत्य। मादाव सहसा णिक्कमिस्ससि [ णिक्कमदु भट्टा ] सप्पोत्ति भणादि। ... छा ॥ मातावत्सहसा निष्क्रामिष्यसि। पा ॥ [ निष्क्रामतु भर्ता ] सर्पइति भणति ॥

---

माळविकेति ॥ माळविका। अनुसृत्य - पश्चाद्गत्वा। वक्ति। त्वम्। तावत् - इदानीं। सहसा - अतर्कयित्वा। मानिष्क्रामिष्यसि - नगमिष्यसि। पाठान्तरे ॥ भर्ता - राजा। ननिष्क्रामतु - ननिर्गच्छतु। कुतः। सर्पः - भुजङ्गइति। भणति - ब्रवीति। विदूषकइत्यध्याहारः ॥

---

इरा ॥ हद्धीहद्धी। भट्टादाव इदोएव्व धावदि। छा ॥ हाधिक् हाधिक्। भर्ता ताव दितएव धावति ॥

---

इरावतीति ॥ इरावती। वक्ति। हाधिक् - अहह। वीप्सायांद्विरुक्तिः। तावत् - संप्रति। भर्ता - राजा। इतः - अत्रैव। धावति

आगच्छति ॥

---

विदू ॥ सप्रहासम् । कहं दण्डकठ्ठं एदं । अहंपुण आणे । जं मए केदअकंटएहिं दंसं करिअ सप्पस्स अअसो किदं । तं मे फळिदंति ।... छा ॥ कथं दण्डकाष्ठ मेतत् । अहंपुन र्जाने । य न्मयाकेतककण्टकै र्दंशं कृत्वा सर्प स्यापयशः कृतं । त न्मे फलितमिति ॥

---

विदूषकइति ॥ विदूषकः । सप्रहासम् - हास्ययुक्तंयथातथा । वक्ति । एतत् - इदम् । कथंदण्डकाष्टम् - कुतोहस्तलगुडम् । अभूदिति शेषः । अहम्पुनः - अहन्तु । जाने - मन्ये । किमिति । मया । केतककण्टकैः - केतकशल्यैः । दंशं - क्षतम् । कृत्वा - विधाय । सर्पस्य - भुजङ्गस्य । यत् । अपयशः - दुर्यशः । कृतं - विहितं । तत् - तदेव । मे - मम । फलितं - निष्पन्नमिति पूर्वेणान्वयः ॥

---

ततःप्रविशति पटाक्षेपेण वकुलावळिका ॥

---

ततइति ॥ ततः - अनन्तरम् । वकुलावळिका - एतन्नामिका माळविकासखी । पटाक्षेपेण - यवनिकाम्बरापकर्षणेन । प्रविशति - रङ्गस्थलम्प्राप्नोति ॥ अत्र पटाक्षेपस्तु त्वराहेतूकइत्यवगन्तव्यम् ॥

---

वकुला ॥ माक्खु भट्टा पविसदु । इह कुडिळगई सप्पो विअ दीसदि । छा ॥ माखलु भर्ता प्रविशतु । इह कुटिलगति स्सर्पइव दृश्यते ॥

---

वकुलावळिकेति ॥ वकुलावळिका । वक्ति । भर्ता - राजा ।

माखलुप्रविशतु - बहिर्निर्गच्छतु । खल्विति वाक्यालंकारे । कुतः । इह - अस्मिन्प्रदेशे । कुटिलगतिः - वक्रगमनः । स्पर्शः - फणीव । दृश्यते- विलोक्यते ॥ इरावत्याः स्थितत्वा दन्यापदेशेनेयमुक्तिः ॥

---

इरा ॥ राजानं सह सोपसृत्य । अवि णिव्विग्घमणोरहो दिवासंकेदो मिहुणस्स । ... छा ॥ अपि निर्विघ्नमनोरथो दिवासंकेतो मिथुनस्य ॥

---

इरावतीति ॥ इरावती । राजानम् - भर्तारम् । सहसोपसृत्य - सत्वरमुपगम्य । वदति । मिथुनस्य - द्वन्द्वस्य । दिवासंकेतः - अहःकृतसंकेतः । निर्विघ्नमनोरथोऽपि - निरन्तरायाभिलाषः किम् ॥

---

सर्वे इरावतीं दृष्ट्वा सम्भ्रान्ताः ॥

---

सर्वइति ॥ सर्वे - राजादयः । इरावतीं । दृष्ट्वा - वीक्ष्य । सम्भ्रान्ताः - भीताः ॥

---

राजा ॥ प्रिये ! अपूर्वोऽय मुपचारः ॥

---

राजेति ॥ राजा । प्राह । हेप्रिये ! अयमुपचारः - दिवासंकेताभिसारइत्याद्यपवादः । अपूर्वः - अननुभूतपूर्वः ॥

---

इरा ॥ वउळावलिए ! भट्टाहिआरविसआ संपुण्णा दे पइण्णा । छा ॥ वकुलावळिके ! भर्त्रभिसारविषया संपूर्णा ते प्रतिज्ञा ॥

---

इरावतीति ॥ इरावती । ब्रवीति । हेवकुलावळिके । भर्त्रभि

सारविषया - राज्ञोमाळविकासंघटनरूपा । ते - तव । सम्पूर्णा प्रतिज्ञा - सम्पूरिताभिनिवेशः । अभूदितिशेषः ॥

---

वकुला ॥ पसीददु भट्टिणी । किं मए किदंति देव्वो पुच्छिदव्वो । दद्दुरा वाहरंतित्ति किं देवो पुहविं वरिसिदुं समरेदि ? । छा ॥ प्रसीदतु भट्टिनी । किं मया कृतमिति देवः प्रष्टव्यः । दर्दुरा व्याहरन्तीति किं देवः पृथिवीं वर्षितुं स्मरति ॥

---

वकुलावळिकेति ॥ वकुलावळिका । वक्ति । भट्टिनी - राज्ञी । प्रसीदतु - प्रसन्नाभवतु । देवः - राजा । मया । किंकृतं - किंवाविहितमिति । प्रष्टव्यः - अनुयोक्तव्यः । दर्दुराः - मेकाः । व्याहरन्ति - ध्वनंतीतिहेतोः । देवः - पर्जन्यः । पृथिवीम् - भूमिं । वर्षितुम् - सेचयितुं । स्मरतिकिन् - ध्यायतिवा । वर्षस्ययथादेवच्छैवकारणम् । तद्वद्राजेच्छैवात्रकारणं किंममप्रतिज्ञयेतिभावः ॥

---

विदू ॥ मादाव भोदीए दंसणमेत्तेण अत्तभवं पणिवादळंघणं विसुमरिदो भोदि । तुमंवुण पसादं णगेण्हासि । छा ॥ मातावद्भवत्या दर्शनमात्रेणात्रभवान् प्रणिपातलंघनं विस्मृतो भवति । त्वंपुनः प्रसादं नगृह्णासि ॥

---

विदूषकइति ॥ विदूषकः । ब्रूते । अत्रभवान् - पूज्यःराजा । भवत्याः - तव । दर्शनमात्रेण - विलोकनेनैव । प्रणिपातलंघनम् - पादपतनातिक्रमप्रयुक्तापराधम् । तावत् - इदानीं । माविस्मृतोभवति - विस्मृतिज्ञतोनभवति । त्वम्पुनः - त्वन्तु । प्रसादम् - प्रसन्नताम् । नगृह्णासि - नस्वीकरोषि ॥ राजनिकटकृत त्वदपराधः प्रसन्नाभूत्वा विस्मारणीय इत्या

शयः ॥

---

इरा ॥ कुविदावि अहं किंकरिस्सं । छा ॥ कुपिताप्यहं किंकरिष्यामि ॥

---

इरावतीति ॥ इरावती । वदति । अहं । कुपिता - कोपयुक्तापि । किंकरिष्यामि - किंवाकर्तुंशक्नोमि ॥

---

राजा ॥ एव मेतत् । अस्थाने कोपइ त्यनुपपन्नं त्वयि । तथाहि ॥

श्लो ॥ कदा मुखं वरतनु ! कारणादृते
तवागतं क्षणमपि कोपपात्रताम् ? ।
अपर्वणि ग्रहकलुषेन्दुमण्डला
विभावरी कथय कथं भविष्यति ॥७४॥

---

राजेति ॥ राजा । प्राह । राज्ञि । एतत् - त्वदुक्तम् । एवम् - इत्थमेव । त्वयि । अस्थाने - अनवसरे । कोपइति - अमर्षइत्येतत् । अनुपपन्नम् - अयुक्तम् । तथाहि - तद्युक्तमेव । कदेति ॥ वरतनु - हेसुंदराङ्गि । तव । मुखम् - आननम् । कारणादृते - हेतुंविना । कोपपात्रताम् - रोषाश्रयत्वम् । क्षणम् - क्षणमात्रमपि । कदा - कस्मिन्समये । आगतम् - प्रापितम् । तदेवापर्वणीत्यादि दृष्टान्तेन व्यक्तीकरोति । अपर्वणि - पर्वातिरिक्तसमये । विभावरी - तमस्विनी । ग्रहकलुषेन्दुमण्डला - उपरागाविलचन्द्रबिम्बा । कथम् - केनप्रकारेण । भविष्यति - सम्पत्स्यते । कथय - वद ॥

---

इरा ॥ अत्थाणेत्ति सुठ्ठु अवधारिदं अज्जउत्तेण । अण्ण संकंतेसु अम्हाणं भाअधेएसु जदिउण कुप्पेअं णं अहं हस्सा भवे । छा ॥ अस्थानेइति सुष्ठु अवधारित मार्यपुत्रेण । अन्य संक्रान्ते ष्वस्माकं भागधेयेषु यदिपुनः कुप्येयं न न्वहं हास्या भवेयम् ॥

---

इरावतीति ॥ इरावती । ब्रवीति । आर्यपुत्रेण - भर्त्रा । अस्थानेइति-अस्थानेकोपइति । सुष्ठु - युक्तमेव । अवधारितं - निश्चितं । अस्माकम् । भागधेयेषु - भाग्येषु । अन्यसंक्रान्तेषु - अन्यत्रप्रविष्टेषुसत्सु । अहं । यदिपुनःकुप्येयम् - कोपम्प्राप्नुयाञ्चेत् । तदा । हास्या - परिहासास्पदा । भवेयंनतु - स्यांहि ॥

---

राजा ॥ त्व मन्यथा कल्पयसि । अहम्पुन स्सत्यमेव कोपस्थानं नपश्यामि । कुतः ॥

श्लो ॥ नार्हति कृतापराधोऽ प्युत्सवदिवसेषु परिजनो बन्धं । इति मोचिते मयैते प्रणिपतितु मा मुपगतेच ॥७८॥

---

राजेति ॥ राजा । प्राह । देवि । त्वम् । अन्यथा - इतरप्रकारेण । कल्पयसि - निरूपयसि । अहम्पुनः - अहन्तु । सत्यम् - तथ्यमेव । कोपस्थानम् - रोषप्रसक्तिम् । नपश्यामि - नविलोकयामि । कुतः - कस्मादितिचेत् । नार्हतीति ॥ कृतापराधः - कृतागस्कोपि । परिजनः - परिचारकजनः । उत्सवदिवसेषु - उत्सवप्रयुक्तहर्षदिनेषु । बन्धम् - संयमम्प्रति । नार्हति - योग्योनभवति । इति - अस्माद्धेतोः । मया । एते - मालविकावकुलावलिके । मोचिते - बन्धान्मोक्षिते । प्रणिपतितुं - नमस्कर्तुं । माम्प्रति । उपगते - सम्प्राप्तेच । नान्यस्मात्कारणा दितिवाक्यार्थः

घयाहारः ॥

---

इरा ॥ निउणिए ! गच्छिअ देविं विण्णावेहि । दिठ्ठं भव दीए एकवक्खवादित्तणं । अवहिदं मे हिअअं अज्जेत्ति । छा ॥ निपुणिके ! गत्वा देवीं विज्ञापय । दृष्ट म्भवत्या एकप क्षपातित्वम् । अवधृतं मे हृदय मद्येति ॥

---

इरावतीति ॥ इरावती । वदति । हेनिपुणिके । त्वम् । गत्वा - यात्वा । देवीं - पट्टमहिषींप्रति । विज्ञापय - निवेदय । किमिति । भ वत्या - त्वया । दृष्टं - विलोकितम् । एकपक्षपातित्वम् । एकत्रैवपक्षपा तः । अद्य - इदानीं । मे - मम । हृदयम् - चित्तम् । अवधृतम् - नि श्चितमिति ॥

---

निपु ॥ तह इतिनिष्क्रान्ता । छा ॥ तथा ··· ॥

---

निपुणिकेति ॥ निपुणिका । वक्ति । तथा - तेनप्रकारेण । क रोमीतिशेषः । इति - एवमुक्त्वा । निष्क्रान्ता - निर्गता ॥

---

विदू ॥ आत्मगतम् । अहो अणन्थो संपडिदो बन्धणब्भट्टो गेहकवोदओ विडाळिआए आळोए पडिदो । छा ॥ ··· अहो अनर्थ स्संपतितो बन्धनभ्रष्टो गृहकपोतको बिडालिकाया आलोके पतितः ॥

---

विदूषकइति ॥ विदूषकः । आत्मगतम् - स्वगतंयथातथा । वक्ति । अन र्थः - उपद्रवः । संपतितः - सम्प्राप्तः । अहो - आश्चर्यम् । कथमितिचे त् । बन्धनभ्रष्टः - बन्धच्युतः । गृहकपोतकः - पोषितपारावतः । नि ॥

पारावतः कलरवः कपोत इत्यमरः ॥ बिडालिकायाः - मार्जालिकायाः। आलोके - विलोकने । पतितः - प्राप्तः ॥

---

प्रविश्यनिपुणिका ॥ देवि ! जदिच्छादिट्ठाए माहविआए आचक्खिदं एव्वंखु एदं णिव्वुत्तंत्ति । इतिकर्णेकथयति । छा ॥ देवि ! यदृच्छादृष्टया माधविक याख्यातम् । एवंख त्वेत न्निर्वृत्तमिति … ॥

---

प्रविश्येति ॥ निपुणिका । प्रविश्य - प्राप्य । वक्ति । देवि - इरावति । यदृच्छादृष्टया - अकस्माद्विलोकितया । माधविकया - एतन्नामिकयाकोशागारनियामिकया । एतत - इदंराजोक्तम् । एवंखलु - इत्थमेव । निर्वृत्तम् - निष्पन्नमिति । आख्यातम् - उक्तम् । इति - एवंप्रकारेण । कर्णे - श्रोत्रे । कथयति - वदति ॥

---

इरा ॥ आत्मगतम् । उववण्णं सव्वंजेव्व । बह्मबंधुणा उब्भिण्णो पओओ । विदूषकं विलोकय प्रकाशम् । इअं अस्स कामतंतसचिवस्स बम्हबंधुणो णीदी । छा ॥ … उपपन्नं सर्वमेव। ब्रह्मबन्धु नोद्भिन्नः प्रयोगः । … इय मस्य कामतन्त्रसचिवस्य ब्रह्मबन्धो र्नीतिः ॥

---

इरावतीति ॥ इरावती । आत्मगतम् - स्वगतंयथातथा । वक्ति । सर्वम् - एतत्समस्तम् । उपपन्नम - युक्तियुक्तमेव । प्रयोगः - कल्पना । ब्रह्मबन्धुना - ब्राह्मणाधमेनगौतमेन । उद्भिन्नः - जातः । विदूषकम् - गौतमं । विलोकय - वीक्षय । प्रकाशम् - सर्वश्राव्यंयथातथा । ब्रवीति । इयम् - एषा । कामतन्त्रसचिवस्य - मन्मथतन्त्रामात्यस्य ।

ब्रह्मबन्धोः - ब्राह्मणब्रुवस्य। अस्य - विदूषकस्य । नीतिः - नयः॥

---

विदू॥ भोदि! जदि णीदीए एक्कंपि अक्खरं पढेअं ण अत्तभवं संसिदो भवे। छा॥ भवति! यदि नीत्या एकम प्य क्षरं पठेयं ना त्रभवन्तं संश्रितो भवेयम्॥

---

विदूषकइति॥ विदूषकः। वदति। भवति - पूजयेराज्ञि। अहम्। नीत्या - नयेन। एकमप्यक्षरम् - एकंवर्णंवा। पठेयंयदि - वदेयं चेत्। तर्हि। अत्रभवन्तम् - पूजयंराजानम। संश्रितः - आश्रितः। नभवेयम् - नस्याम्॥

---

राजा॥ अपवार्य। आः। कथंनुखल्वस्मा त्संकटा न्मोच्यावहे॥

---

राजेति॥ राजा। अपवार्य - जनान्तिकंयथातथा। प्राह। वयस्य। अस्मात - एतस्मात्। सङ्कटात् - सम्बाधात्। कथंनुखलु - केनवाउपायेन। मोच्यावहे - मुक्तोभवानि। सम्भावनायांलोट्॥

---

प्रविश्य सावेगा जयसेना॥ देव! कुमारी वसुलच्छी कंदुअं अणुधावंती पिंगळवाणरेण बळिअं वित्तासिदा। अंकणिसण्णाअ देवीए पवादकिसळअंविअ वेवमाणा णक्किंपि पडिवज्जदि। छा॥ देव! कुमारी वसुलक्ष्मीः कन्दुक मनुधावंती पिङ्गळवानरेग बलीयो वित्रासिता। अंकनिषण्णाच देव्याः प्रवातकिसलयमिव वेपमाना नकिमपि प्रतिपद्यते॥

---

प्रविशयेति ॥ जयसेना -एतन्नाम्नीपट्टमहिषीपरिचारिका । सावेगा - त्वरितासती । प्रविशय - राजसमीपम्प्राप्य । वदति । देव - महाराज । वसुलक्ष्मीः - एतन्नामिका । कुमारी - बाला । कन्दुकम् - गेन्दुकम् । नि ॥ गेन्दुकः कन्दुकइत्यमरः ॥ अनुधावन्ती - अनुसरन्ती । पिङ्गळवानरेण - पिङ्गळाक्षेणप्लवङ्गेन । बलीयोवित्रासिता - अतीवभयंप्रापिता । देव्याः - पट्टमहिष्याः । अंकनिषण्णा - उत्सङ्गोपविष्टाच । प्रवातकिसलयम् - प्रकृष्टवायुप्रदेशस्थितपल्लवमिव । वेपमाना - कम्पमाना । किमपि - किञ्चिदपि । नप्रतिपद्यते - नचेतयते ॥

---

राजा ॥ कष्टंकष्टम् । कातरो बाल भावः ॥

---

राजेति ॥ राजा । प्राह । कष्टंकष्टम् - अतीवकष्टं । भृशार्थे द्विरुक्तिः । बालभावः - शैशवम् । कातरः - धैर्यरहितः ॥

---

इरा ॥ सावेगम । तुवरदु तुवरदु अज्जउत्तो णं समासासइदुं मा से संदावजणिदो विआरो वड्ढदु । छा ॥ ... त्वरतां त्वरता मार्यपुत्र एनां समाश्वासयितुं मास्या स्संतापजनितो विकारो वर्धताम् ॥

---

इरावतीति ॥ इरावती । सावेगम् - सत्वरंयथातथा । वक्ति । आर्यपुत्रः - भर्ता । एनां - वसुलक्ष्मीं । समाश्वासयितुं - सम्यक्प्राणयितुं । त्वरतां - त्वरांकुरुतां । सम्भ्रमाद्द्विरुक्तिः । अस्याः - वसुलक्ष्म्याः । सन्तापजनितः - वेदनाजन्यः । विकारः - विकृतिः । मावर्धतां - वृद्धिंनप्राप्नोतु ॥

---

राजा ॥ अहमेनां संज्ञापयामि । इति सत्वरं निष्क्रामति ॥

---

राजेति ॥ राजा । प्राह । अहं । एनां - वकुललक्ष्मीं । संज्ञापयामि - सचेतनांकरोमि । इति - एवमुक्त्वा । सत्वरं - सावेगंयथातथा । निष्क्रामति - निर्गच्छति ॥

---

विदू ॥ साहु रे पिंगळवारण ! साहु । परित्तादो तुए सवक्खो । छा ॥ साधु रे पिङ्गळवानर ! साधु । परित्रात स्त्वया स्वपक्षः ॥

---

विदूषकइति ॥ विदूषकः । ब्रूते । रेपिङ्गळवानर - हेपिशङ्गाक्ष प्लवङ्ग । साधु - सम्यक् । पुनस्साधु । त्वया । स्वपक्षः - आत्मपक्षः । परित्रातः - रक्षितः । अहमितिशेषः ॥ तुल्यबुद्धित्वा दात्मन स्तत्पक्षत्व मितितस्याशयः ॥

---

निष्क्रान्तो राजा विदूषक श्चेरावती निपुणिका प्रतिहारीच ॥

---

निष्क्रान्तेति ॥ राजा - अग्निमित्रः । विदूषकः - गौतमश्च । इरावती - एतन्नाम्नीराज्ञोद्वितीयपत्नी । निपुणिका - एतन्नामिकातच्चेटी । प्रतिहारी । द्वारपालिकाच । निष्क्रान्तः - निर्गतइति लिङ्गविपरिणा मेन यथायोगं प्रत्येकमनुषज्यते ॥

---

माळ ॥ देविं चिंतिअ वेवइ मे हिअअं । णआणे संपदिं किंअदो अणुभविदव्वं हविस्सदित्ति । छा ॥ देवीं चिन्तयित्वा वेपते मे हृदयम् । नजाने संप्रति किमतोऽनुभवितव्यं भविष्यतीति ॥

---

माळविकेति ॥ माळविका । वक्ति । सखि ! देवीम् - पट्टमहिषीम् । चिन्तयित्वा - आलोच्य । मे - मम । हृदयम् - चित्तम् । वेपते - कम्पते । सम्प्रति - इदानीं । अतः - अस्मात् । किं - किंवा । अनुभवितव्यम् - उपलब्धव्यम् । भविष्यति - सम्पत्स्यतइति । नजाने - न वेद्मि ॥

---

नेपथ्ये ॥ अच्चरिअं अच्चरिअं । अपुण्णेएव्व पंचरत्ते दोहळस्स मुउळेहिं सण्णद्धो तवणीआसोओ । जाव देवीए णिवेदेमि । छा ॥ आश्चर्य माश्चर्यम् । अपूर्णएव पञ्चरात्रे दोहदस्य मुकुळै रसन्नद्ध स्तपनीयाशोकः । याव द्देव्यै निवेदयामि ॥

---

नेपथ्यइति ॥ नेपथ्ये - यवनिकाभ्यन्तरे । किञ्चिद्वाक्यंप्रसृतं । किमिति । आश्चर्यं - अद्भुतं । हर्षाद्विरुक्तिः । पञ्चरात्रे - दिनपञ्चके । अपूर्णे - अनिर्वृत्तएव । दोहदमारभ्येतिशेषः । तपनीयाशोकः - एतन्नामको वृक्षविशेषः । दोहदस्य - क्रियाविशेषस्य । सम्बन्धिभिरितिशेषः । मुकुळैः - कुट्मलैः । सन्नद्धः - सम्बद्धः । एतत् । देव्यै - पट्टमहिष्यै । यावन्निवेदयामि - विज्ञापयिष्यामि ॥

---

उभे श्रुत्वा प्रहृष्टे ॥

---

उभेइति ॥ उभे - माळविकावकुलावळिके । श्रुत्वा - आकर्ण्य । नेपथ्योक्तमितिशेषः । प्रहृष्टे - संतुष्टे ॥

---

वकुला ॥ आसासदु सही । सच्चप्पइण्णा देवी । छा ॥

आश्वसितु सखी । सत्यप्रतिज्ञा देवी ॥

---

वकुळावळिकेति ॥ वकुलावळिका । वक्ति । सखी - सहचरी माळविका । आश्वसितु - आश्वासंप्राप्नोतु । देवी - पट्टमहिषी । सत्यप्रतिज्ञा - यथार्थप्रतिज्ञा ॥ अत्र देव्यनुग्रहरूपकार्य संग्रहणा दादानंनाम सन्धयङ्गमुक्तंभवति ॥

---

माळ ॥ तेण अहं पमदवणपाळिआए पिठ्ठदो भोमि । छा ॥ तेनाहं प्रमदवनपालिकायाः पृष्ठतो भवामि ॥

---

माळविकेति ॥ माळविका । वक्ति । तेन - हेतुना । अहम् । प्रमदवनपालिकायाः - उद्यानवनपालिकायाः । पृष्ठतः - पश्चाद्भागे । भवामि - स्याम् । अनुसृत्ययास्यामीत्यर्थः ॥ इदंमाळविका कृतमुद्यान पालिकानुसरण मुत्तरांकोपयोगित्वा द्बिन्दुरित्यनुसन्धेयम् ॥

---

वकुला ॥ तह । छा ॥ तथा ॥

---

वकुलावळिकेति ॥ वकुलावळिका । वक्ति । तथा - तेनप्रकारेण । करिष्याव इत्यध्याहारः ॥

---

इति निष्क्रान्ते ॥

---

इतीति ॥ इति - एवमुक्त्वा । निष्क्रान्ते - निर्गते ॥

---

इ ति च तु र्थो ऽ कः ॥

---

इति श्रीमन्मृत्युञ्जय निश्शंकक्षोणीपालविरचिते
माळविकाग्निमित्रव्याख्याने विबुधरञ्जनी
समाख्याने
चतुर्थोऽङ्कः।

श्रीरस्तु.

# मालविकाग्निमित्रम्.

## पञ्चमोऽङ्कः.

ततःप्रविश त्युद्यानपालिका॥

कवि रिदानी मंकान्तरमारभमाणः कथासंघटनार्थं प्रथमं प्रवेशकं नामार्थोपक्षेपकंप्रस्तौति। ततइत्यादि॥ ततः - अनन्तरम्। उद्यानपालिका - प्रमदवनाधिकृता। प्रविशति - रङ्गस्थलम्प्राप्नोति॥

उद्यानपालिका॥ उवक्खिवसो मए सक्कारविहिणा तवणीआसोअस्स भित्तिवेदिआबंधो। जाव अणुठ्ठिदणिओअं अत्ताणं देवीए णिवेदेमि। परिक्रम्य। अदो देव्वस्स अणुकंपणीआ मालविआ तस्सिं तह चंडिआ देवी इमिणा असोअहरिसदोहळउत्तंतेण पसादुम्मुही भविस्सदि। कहिंणुक्खु भवे देवी?। विलोक्य। अम्मो एसो देवीए परिअणंतरो किंपि जदुमुद्दाळंछिदं मंजूसं गेण्हिअ चउस्साळादो कुज्जो सारसिओ णिक्कामदि। पुच्छिस्संदाव णं। छा॥ उपक्षिप्तो मया सत्कारविधिना तपनीयाशोकस्य भित्तिवेदिकाबन्धः। याव दनुष्ठितनियोग मात्मानं देव्यै निवेदयामि। ... अतो देव स्या

नुकम्पनीया माळविका। तस्यां तथा चण्डिका देवी अनेनाशोकहर्षदोहदवृत्तान्तेन प्रसादोन्मुखी भविष्यति। कुत्रनुखलु भवे द्देवी ? ... अहह एष देव्याः परिजनांतरं किमपि जतुमुद्रालांछितां मंजूषां गृहीत्वा चतुश्शालात् कुब्ज स्सारसिको निष्क्रामति। प्रक्ष्यामिताव देनम् ॥

---

उद्यानपालिकेति ॥ उद्यानपालिका । वदति । मया । तपनीयाशोकस्य - एतन्नाम्नोवृक्षविशेषस्य । सत्कारविधिना - पूजाविधानेन । भित्तिवेदिकाबन्धः - भित्तेः - कुड्यस्य । वेदिकायाः - वितर्दिकायाश्च । आबन्धः - निर्माणम् । उपक्षिप्तः - निष्पादितः । अनुष्ठितनियोगं - कृतनिर्देशाम् । आत्मानम् - मां । देव्यै - पट्टमहिष्यै । यावन्निवेदयामि - विज्ञापयिष्यामि । परिक्रम्य - किञ्चिद्गत्वा । अतः - अस्माद्धेतोः । माळविका - एतन्नाम्नीबालिका । दैवस्य - विधेः । अनुकम्पनीया - दयनीया। कुतः । तस्यां - माळविकायां । तथा - तेनप्रकारेण । चण्डिका - कोपना । देवी-पट्टमहिषी । अनेन -एतेन । अशोकहर्षदोहदवृत्तान्तेन - अशोकस्य - तपनीयाशोकस्य । हर्षेण - संतोषकरेण । दोहदवृत्तांतेन - पुष्पोत्पादकक्रियाविशेषोदन्तेन । प्रसादोन्मुखी - प्रसन्नताभिमुखी । भविष्यति - सम्पत्स्यते । देवी - पट्टमहिषी । कुत्रनुखलु - क्व । भवेत् - स्यात् । वसेदित्यर्थः ॥ विलोक्य - दृष्ट्वा । देव्याः - पट्टमहिष्याः । परिजनान्तरम् - परिचारकविशेषः । सारसिकः- एतन्नामकः । एषकुब्जः - अयंवामनः । किमपि - कुतोवाहेतोः । जतुमुद्रालाञ्छितां - लाक्षामुद्रिताम् । मञ्जूषाम् - पेटिकाम् । गृहीत्वा - धृत्वा । चतुश्शालात् - गृहविशेषात् । निष्क्रामति - निर्गच्छति । तावत् - इदानीं । एनं - सारसिकम् । प्रक्ष्यामि - प्रश्नंकरिष्यामि ॥

---

ततःप्रविशति यथानिर्दिष्टहस्तः कुब्जः ॥

---

ततइति ॥ ततः - अनन्तरम् । यथानिर्दिष्टहस्तः - करधृतजतुमुद्रितपेटिकः । कुब्जः - वामनः । प्रविशति - रङ्गस्थलंप्राप्नोति ॥

---

उद्यान ॥ **सारस ! कहिं पत्थिदोऽसि ? । छा ॥ सारस ! कुत्र प्रस्थितोऽसि ॥**

---

उद्यानपालिकेति ॥ उद्यानपालिका । वक्ति । सारस - कुत्रप्रस्थितोऽसि - कंप्रदेशङ्गच्छसि ॥

---

सारसः ॥ **मडुआरिए ! विज्जाचारिआणं बम्हणाणं इमं णिच्चदक्खिणाणिक्काइं अज्जपुरोहिदस्स हत्थं पावइस्सं । छा॥ मधुकरिके ! विद्याचरितानां ब्राह्मणाना मिमानिनित्यदक्षिणानिष्काणि आर्यपुरोहितस्य हस्तं प्रापयिष्यामि ॥**

---

सारसइति ॥ सारसः । वक्ति । हे मधुकरिके । विद्याचरितानाम् - अधययनशीलानाम् । ब्राह्मणानाम् - भूसुराणाम् । इमानि - एतानि । नित्यदक्षिणानिष्काणि - प्रतिदिनदेयदक्षिणार्थदीनाराणि । आर्यपुरोहितस्य - पूज्यपुरोधसः । हस्तं - पाणिं । प्रापयिष्यामि - नेष्यामि ॥

---

मधु ॥ **अह किंनिमित्तं । छा ॥ अथ किंनिमित्तम् ॥**

---

मधुकरिकेति ॥ मधुकरिका । वदति । अथेतिवाक्यारम्भे । किंनिमित्तं - केनहेतुना । दक्षिणादानस्येतिशेषः ॥

---

सार ॥ जदापहुदि सुदं सेणापदिणा जण्णतुरङ्गरक्खणे णिउत्तो भट्टिदारओत्ति । तस्स आउसत्थं अट्ठसदसुवण्णपरिमाणं दक्खिणा एहिं पडिण्णा होदि । छा ॥ यदाप्रभृति श्रुतं सेनापतिना । यज्ञतुरङ्गरक्षणे नियुक्तो भर्तृदारकइति तस्यायुष्यार्थ मष्टशतसुवर्णपरिमाणं दक्षिणेभ्यः प्रतिज्ञा भवति ॥

---

सारसइति ॥ सारसः । वदति । यदाप्रभृति - यंसमयमारभ्य । सेनापतिना - सैन्याधिपेनसह । यज्ञतुरङ्गरक्षणे - यजनाश्वावनेविषये । भर्तृदारकः - वसुमित्राख्योराजपुत्रः । नियुक्तः - नियोजितइति । श्रुतम् - आकर्णितम् । देव्येतिशेषः । तस्य - राजपुत्रस्य । आयुष्यार्थम् - आयुरभिवृद्धयर्थम् । अष्टशतसुवर्णपरिमाणम् - अष्टशतपरिमितंसुवर्णम् । एभ्यः - भूसुरेभ्यः । दक्षिणा - स्पष्टार्थं । प्रतिज्ञा - प्रतिश्रुता । भवति - संपद्यते ॥

---

मधु ॥ अह कहिं देवी किंआ अणुचिट्ठदि । छा ॥ अथ कुत्र देवी किंवानुतिष्ठति ॥

---

मधुकरिकेति ॥ मधुकरिका । वक्ति । अथ - अनन्तरम् । देवी - पट्टमहिषी । कुत्र - कस्मिन्स्थले । किंवाप्रयोजनम् । अनुतिष्ठति- आचरति ॥

---

सार ॥ मंगलगेहके आसणत्था विदब्भविसआदो भादुणा वीरसेणेण पेसिदं लेहं लिपिअरेहिं वाचीअमाणं सुणादि । छा ॥ मङ्गळगृहके आसनस्था विदर्भविषयात् भ्रात्रा वीरसेनेन

प्रेषितं लेखं लिपिकरै र्वाच्यमानं शृणोति ॥

---

सारसइति ॥ सारसः । कथयति । मङ्गळगृहके - कल्याणगेहे । आसनस्था - पीठस्थिता । देवीतिशेषः । विदर्भविषयात् - एतन्नामकाद्देशात् । भ्रात्रा - वर्णावरसोदरेण । वीरसेनेन - एतन्नाम्नासेनापतिना । प्रेषितं - प्रापितं । लिपिकरैः - लेखकैः । वाच्यमानम् - श्राव्यमाणम् । लेखम् - पत्रिकां । शृणोति - आकर्णयति ॥

---

मधु ॥ कोउण विदब्भराअवुत्तंतो सुणीअदो ? । छा ॥ कः पुन र्विदर्भराजवृत्तान्त श्श्रूयते ॥

---

मधुकरिकेति ॥ मधुकरिका । वक्ति । कःपुनः - कोवा । विदर्भराजवृत्तान्तः - विदर्भदेशाधिपोदन्तः । श्रूयते - आकर्ण्यते । देव्येतिशेषः ॥

---

सार ॥ वसीकिदोकिळ वीरसेणप्पमुहेहिं दंडचक्केहिं भट्टिणो विदब्भणाहो । मोइदोकिळ से दाआदो माहवसेणो । दूदोअ महासाराणि रअणवाहणाणि सिप्पकारिआभूइट्ठं वरिअणंच उवाअणीकरिअ भट्टिणो सआसं पेसिदो । सोकिळ भट्टारअं पेक्खिस्सदि । छा ॥ वशीकृतःकिल वीरसेनप्रमुखे र्दण्डचक्रै र्भर्तु र्विदर्भनाथः । मोचितश्चाकि लास्य दायादो माधवसेनः । दूतश्च महासाराणि रत्नवाहनानि शिल्पकारिकाभूयिष्ठं परिजन श्चोपायनीकृत्य भर्तु स्सकाशं प्रेषितः । सकिल भट्टारकं प्रेक्षिष्यते ॥

सारसइति ॥ सारसः । कथयति । विदर्भनाथः - विदर्भदेशाधीशः । वीरसेनप्रमुखैः - एतन्नामकसैन्याधिपप्रभृतिभिः । भर्तुः - स्वामिनः । दण्डचक्रैः- दण्डप्रधानानीकैः । वशीकृतः- स्वायत्तीकृतःकिल । अस्य - विदर्भक्षितिपालस्य । दायादः - ज्ञातिः । माधवसेनः - एतन्नामकोराजा । मोचितः - त्याजितश्चकिल । महासाराणि - महोत्कृष्टानि । रत्नवाहनानि - मणिखचितरथादिवाहनानि । शिल्पकारिकाभूयिष्टं - चित्रलेखनादिकरणनिपुणयोषिज्जनबहुळं । परिजनं - भृत्यजनञ्च । उपायनीकृत्य- उपहारंकृत्वा । भर्तुः - राज्ञोऽग्निमित्रस्य । सकाशं - सन्निधिं । दूतः - भृत्यश्च । प्रेषितः - प्रापितः । सः - विदर्भराजः । भट्टारकम् - राजानम् । प्रेक्षिष्यते - द्रक्ष्यतिकिल ॥

मधु ॥ गच्छ अणुचिठ्ठ अत्तणो णिओअं। अहंपि देवीं पेक्खिस्सं। छा ॥ गच्छानुतिष्ठात्मनो नियोगम्। अहमपि देवीं प्रेक्षिष्ये ॥

मधुकरिकेति ॥ मधुकरिका । वदति । हे सारस । त्वं । गच्छ - व्रज । आत्मनः - स्वस्य । नियोगम् - निदेशम् । अनुतिष्ठ - निर्वर्तय । अहमपि । देवीं - पट्टमहिषीं । प्रेक्षिष्ये - द्रक्ष्यामि ॥

इतिनिष्क्रान्तौ ॥

इतीति ॥ इति - एवमुक्त्वा । निष्क्रान्तौ - निर्गतौ । मधुकरिकासारसावित्यर्थाल्लभ्यते ॥

इ ति प्र वे श कः ॥

---

ततः प्रविशति प्रतिहारी ॥

---

ततइति ॥ ततः - अनन्तरम् । प्रतिहारी - द्वारपालिका । प्रविशति - रङ्गस्थलंप्राप्नोति ॥

---

प्रतिहारी ॥ आणत्तम्हि देवीए असोअसक्कारव्वाविदाए, विण्णवेहि अज्जउत्तं । इच्छामि अज्जउत्तेण सह असोअरुक्खस्स पसूणलच्छिं पच्चक्खीकादुंति । ता जाव धम्मासणगदं देवं पडिवालेमि । इति परिक्रामति । छा ॥ आज्ञप्तास्मि देव्याशोकसत्कारव्यापृतया, विज्ञापयार्यपुत्रम् । इच्छाम्यार्यपुत्रेणसहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुमिति । तद्याव द्धर्मासनगतं देवं प्रतिपालयामि ... ॥

---

प्रतिहारीति ॥ प्रतिहारी । वदति । अशोकसत्कारव्यापृतया-अशोकस्य - एतन्नाम्नोवृक्षविशेषस्य । सत्कारे - वेदिकारचनादिबहूकारे । व्यापृतया - सप्रयत्नया । देव्या - पट्टमहिष्या । आज्ञप्ता - नियुक्तास्मि । किमिति । आर्यपुत्रेणसह - भर्त्रासत्रा । नि ॥ साकंसत्रासमंसहेत्यमरः ॥ अशोकवृक्षस्य - तपनीयाशोकस्य । प्रसूनलक्ष्मीं - पुष्पसम्पत्तिम् । प्रत्यक्षीकर्तुं - प्रेक्षितुम् । इच्छामि - स्पृहयामीति । आर्यपुत्रम् - भर्तारं प्रति । विज्ञापय - निवेदयेति । तत् - तस्मात् । धर्मासनगतम् - धर्मपीठस्थम् । देवम् - महाराजम् । यावत्प्रतिपालयामि - प्रतीक्षिष्ये । इति एवमालोच्य । परिक्रामति - किञ्चिद्गच्छति ॥

---

नेपथ्येवैतालिकौ ॥ दिष्ट्या दण्डेनै वारिशिरस्सु वर्तते देवः ॥

नेपथ्यइति ॥ वैतालिकौ - स्तुतिपाठकौ । नेपथ्ये - तिरस्करिण्यन्तरे । वदतः । देवः - राजा । दिष्ट्या - दैववशेन । दण्डेनैव - दण्डानीकमात्रेण । अरिशिरस्सु - रिपुमूर्धसु । वर्तते - तिष्ठति ॥

प्रथमः ॥

श्लो ॥ परभृत कलव्याहारेषु त्व मात्तरति र्मधुं
नयसि विदिशातीरोद्याने ष्वनङ्ग इ वाङ्गवान् ।
विजयकरिणा मालानां गै रुपोढबलस्य ते
वरद ! वरदारोधोवृक्षैस्स हावनतो रिपुः ॥७६॥

प्रथमइति ॥ प्रथमः - तयोराद्यो वैतालिकः । वदति । परभृतेति ॥ आत्तरतिः - स्वीकृतरत्यभिधानजानिः गृहीतपरितोषश्च । परभृतकलव्याहारेषु - परभृतानाम् - कोकिलानांवन्दिनांच । कलव्याहारेषु - मधुरोक्तिषु । मधुं - वसन्तं माधुर्यंच । विदिशातीरोद्यानेषु - विदिशाख्यनदीकूलोपवनेषु । अङ्गवान् - शुभाङ्गः । अनङ्गः - मन्मथइव । त्वं । नयसि - प्रापयसि । हे वरद - अभीष्टप्रद । उपोढबलस्य - प्रबलसैन्यस्य । ते - तव । रिपुः - शत्रुः । विजयकरिणां-जयशीलानाङ्गजानाम् । आलानाङ्गैः - बन्धनसाधनभूतैः । वरदारोधोवृक्षैस्सह - वरदाख्यनदीतीरस्थितपादपैस्साकम् । अवनतः - नम्रोजातः ॥

द्वितीयः ॥

श्लो ॥ विरचितपदं वीरप्रीत्या सुरोपमसूरिभि
श्चरित मुभयो र्मध्येकृत्य स्थितं क्रथकैशिकान् ।
तव स्तनवतो दण्डानीकै र्विदर्भपते श्श्रियं

परिघगुरुभि र्दोर्भि र्विष्णोः प्रसह्यच रुक्मिणी ॥७७॥

---

द्वितीयइति ॥ द्वितीयः - प्रथमानन्तरो वैतालिकः । वदति । विरचितपदमिति ॥ परिघगुरुभिः - परिघास्त्रवद्दृढैः । दोर्भिः । बाहुभि. । रुक्मिणीम् - एतन्नामिकांकन्यकां । प्रसह्य - बलात्कारेण । हृतवतः - आकृष्टवतः । विष्णोः - देवकीनन्दनस्य । विदर्भ पतेः - विदर्भदेशाधीशस्य । श्रियम् - राजयलक्ष्मीं । दण्डानीकैः - दण्डचक्रैः । हृतवतः - हरणंकृतवतः । तवच । चरितम् - चारित्रम् । सुरोपमसूरिभिः - देवोपमैर्विद्वद्भिः । वीरप्रीत्या - शूरभक्त्या । विरचितपदम् - कृतगतिम् । क्रथकैशिकान् - एतदाख्यजनपदान् । मध्येकृत्य - अधिष्ठाय । स्थितं - वर्तते ॥ अनेनतवविदर्भश्रीहरणं कृष्णस्य रुक्मिणीहरणमिव अतीवयशस्करमित्याशयः ॥

---

प्रति ॥ एसो जअसद्दसूइदप्पत्थाणो भट्टा इदोएव्व आअच्छदि । अहंपिदाव इमस्स मुहादो अवसरिअ एदं मुहालिंदतोरणं समस्सिदा होमि । इ त्येकान्ते स्थिता । छा ॥ एष जयशब्दसूचितप्रस्थानो भ र्तैतए वागच्छति । अहमपितावद स्य मुखा त्समपसृ त्यैतन्मुखालिन्दतोरणं समाश्रिता भवामि … ॥

---

प्रतिहारीति ॥ प्रतिहारी । वक्ति । जयशब्दसूचितप्रस्थानः-जयशब्देन - भटप्रोक्तजयत्वितिनिनदेन । सूचितम् - ज्ञापितं । प्रस्थानं - निर्गमनंयस्यसतथाभूतः । एषः - अयम् । भर्ता - राजा । इतः - अमुंप्रदेशमेव । आगच्छति - आयाति । तावत - इदानीं । अहमपि । अस्य - राज्ञः । मुखात् - अग्रभागात् । समपसृत्य - बहिर्गत्वा । एतत - इदं । मुखालिन्दतोरणम् - प्रमुखस्थालिन्दप्रधानबहिर्द्वारं । समाश्रिता-सन्निविष्टा ।

भवामि - स्याम् । इति - एवमालोच्य । एकान्ते - रहसि । स्थिता - वर्ततेस्म ॥

---

प्रविश्य सवयस्यो राजा ॥

श्लो ॥ कान्तां विचिन्त्य सुलभेतरसंप्रयोगां
श्रुत्वा विदर्भपति मानमितं बलैश्च ।
धाराभि रातपइ वाभिहतं सरोजं
दुःखायतेच हृदयं सुख मश्नुतेच ॥७८॥

---

प्रविश्येति ॥ सवयस्यः - सगौतमः । राजा - अग्निमित्रः । प्रविश्य - प्राप्य । प्राह । कान्तामिति ॥ कान्तां - माळविकां । सुलभेतरसंप्रयोगां - दुर्लभसमागमां । विदर्भपतिमानम् - विदर्भदेशाधीशगर्वं । बलैः - सैन्यैः । इतम् - गतञ्च । विचिन्त्य - समालोच्य । श्रुत्वा - आकर्ण्य । आतपे - सूर्यातपे । स्थितमितिशेषः । सरोजं - पद्मं । धाराभिः - वर्षधाराभिः । अभिहतं - आहतमिव । हृदयम् - मानसं । दुःखायते - क्लेशयुक्तंचभवति । सुखं - शर्म । अश्नुते - प्राप्नोतिच ॥ अत्र माळविकारूपबीजानुसन्धाना त्सन्धिर्नामनिर्वहण सन्धयङ्गमुक्तंभवति ॥

---

विदू ॥ इह पेक्खामि [ जह अहं पेक्खामि तह ] एक्कन्त सुहिदो भवं भविस्स दित्ति । छा ॥ इह प्रेक्षे [ यथा अहं प्रेक्षे तथा ] एकान्तसुखितो भवान् भविष्यतीति ॥

---

विदूषकइति ॥ विदूषकः । आह । भवान् । एकान्तसुखितः - नियतसुखी । भविष्यति - सम्पत्स्यतइति । इह - अस्मिन्विषये । प्रेक्षे

- विलोकयामि। पाठान्तरे॥ अहं। यथा - येनप्रकारेण। प्रेक्षे-पश्यामि। तथा - तेनप्रकारेण। भविष्यतीतिशेषः। शिष्टंपूर्ववत्॥

---

राजा॥ कथमिव?॥

---

राजेति॥ राजा। प्राह। कथमिव - कथमितिप्रश्ने। इवेति वाक्यालंकारे॥ अत्र कार्यान्वेषणा द्विरोधोनाम सन्ध्यङ्गमुक्तंभवति॥

---

विदू॥ अज्जकिल देवीए धारिणीए पण्डिदकोसिआ भणिदा। भअवदि! तुमं जदि सच्चं पसाहणगव्वं वहेसि दं सेहिदाव मालविआए सरीरे विवाहणेवत्थंति। तदो सविसेस कोदुहळं अळंकिदा मालविआ तत्तभोदीए। कदावि पूरए भवदो मणोरहं। छा॥ अद्यकिल देव्या धारिण्या पण्डितकौशिकी भणिता। भगवति! त्वं यदि सत्यं प्रसाधनगर्वं वहसि दर्शयताव न्माळविकाया शरीरे विवाहनेपथ्यमिति। तत स्स विशेषकौतूहल मलङ्कृता माळविका तत्रभवत्या। कदापि पूरये द्भवतो मनोरथम्॥

---

विदूषकइति॥ विदूषकः। कथयति। अद्यकिल - इदानींखलु। धारिण्या - एतदाख्यया। देव्या - पट्टमहिष्या। पण्डितकौशिकी - एतन्नाम्नीपरिव्राजिका। भणिता - कथिता। किमिति। हे भगवति - पूज्ये परिव्राजिके। त्वम्। प्रसाधनगर्वं - अहमेवालंकरण निपुणे त्यभिमानं। नि॥ प्रतिकर्मप्रसाधन मित्यमरः॥ सत्यम् - तथ्यम्। वहसियदि - प्राप्नोषिचेत। माळविकायाः - एतन्नामिकायाः बालिकायाः। शरीरे - देहे। विवाहनेपथ्यं - परिणयोचितवेषम्। तावत् - साकल्येन। दर्शय - प्रेक्ष

येति। ततः - अनन्तरम्। तत्रभवत्या - पूजयया पण्डितकौशिकया। मालविका। सविशेषकौतूहलं - सातिशयितकौतुकंयथातथा। अलंकृता - भूषिता। तस्मात्। भवतः - तवापि। मनोरथं - अभिलाषं। कदा - कस्मिंश्चित्समये। पूरयेत् - पूर्णंकुर्यात्॥ अत्र कार्योपदर्शना त्पूर्वभावइति सन्धयङ्गमुक्तंभवति॥

---

राजा॥ सखे! मदपेक्षा मनुवृत्य अनया धारिण्या पूर्वचरितै स्सम्भाव्यतएवैतत्॥

---

राजेति॥ राजा। प्राह। हे सखे - प्रियगौतम। धारिण्या - एतदाख्यया। अनया - एतया मत्पत्न्या। मदपेक्षां - मयिस्थितंप्रेमाणम्। अनुवृत्य - अनुसृत्य। पूर्वचरितैः - पूर्वकृतोपकारैः। एतत् - इदं। सम्भाव्यते - ऊह्यतएव॥

---

प्रति॥ उपगम्य। जेदुजेदु देवो। देवी विण्णावेदि। तवणीआसोअस्स कुसुमोग्गमसिरिं अज्जउत्तेणसह पच्चक्खीकादुं इच्छामित्ति। छा॥ ... जयतुजयतु देवः। देवी विज्ञापयति। तपनीयाशोकस्य कुसुमोद्गमश्रिय मार्यपुत्रेणसह प्रत्यक्षीकर्तु मिच्छामीति॥

---

प्रतिहारीति॥ प्रतिहारी - द्वारपालिका। उपगम्य - समीपमेत्य। वक्ति। देवः - महाराजः। जयतु - सर्वोत्कर्षेणवर्ततताम्। आदराद्द्विरुक्तिः। देवी - पट्टमहिषी। विज्ञापयति - निवेदयति। किमिति। आर्यपुत्रेणसह-भर्त्रासाकम्। तपनीयाशोकस्य - एतन्नामकवृक्षस्य। कुसुमोद्गमश्रियं - पुष्पोत्पत्तिशोभां। प्रत्यक्षीकर्तुं - प्रेक्षितुं। इच्छामि - वा

च्छामीति ॥

---

राजा ॥ ननु तत्रैव देवी ? ॥

---

राजेति ॥ राजा । प्राह । ननु - प्रतिहारी । देवी - पट्टमहिषी । तत्र - तपनीयाशोकनिकटएव । वर्ततेकिमितिशेषः ॥

---

प्रति ॥ अथइं । जहा तुह सम्माणसुहं । अंतेउरं विसज्जिअ मालविआपुरोएण अत्तणो परिअणेण [ पंडिअकोसिआएअ ] समं देवं पडिवालेदि । छा ॥ अथकिम् । यथा तव संमानसुखम् । अन्तःपुरं विसृज्य मालविकापुरोगेणात्मनः परिजनेन [ पण्डितकौशिक्याच ] समं देवं प्रतिपालयति ॥

---

प्रतिहारीति ॥ प्रतिहारी । वदति । अथकिं - तथैव । यथा - येनप्रकारेण । तव । संमानसुखम् - सत्कारपूर्वकंशर्मप्रभवति । तथा । अन्तःपुरम् - शुद्धान्तं । विसृज्य - परित्यज्य । मालविकापुरोगेण - एतन्नामककन्यकापुरस्सरेण । आत्मनः - स्वस्य । परिजनेनसमम् - भृत्यजनेन साकम् । पाठान्तरे ॥ पण्डितकौशिकया समम् - परिव्राजिकयाचसह । देवम् - महाराजम् । भवन्तमित्यर्थः । प्रतिपालयति - निरीक्षते ॥

---

राजा ॥ सहर्षं विदूषकं विलोक्य । जयसेने ! गच्छाग्रतः ॥

---

राजेति ॥ राजा । विदूषकं - गौतमाख्यंनटविशेषम् । सहर्षं - सानन्दंयथातथा । विलोक्य - वीक्ष्य । प्राह । हे जयसेने - एतन्नामकप्रतिहारि । अग्रतः - पुरतः । गच्छ - याहि ॥

---

प्रति ॥ एदुएदु देवो। इति परिक्रामति। छा ॥ एत्वेतु देवः॥

---

प्रतिहारीति ॥ प्रतिहारी। वक्ति। देवः - राजा। एतु - आगच्छतु। आदराद्विरुक्तिः। इति - इत्थमुक्त्वा। परिक्रामति - पुरोगच्छति॥

---

विदू ॥ विलोक्य। भो वअस्स! किंचि परिवुत्तजोव्वणोविअ वसंतो पमदवणे लक्खीअदि। छा ॥ ... भो वयस्य! किंचि त्परिवृत्तयौवनइव वसन्तः प्रमदवने लक्ष्यते॥

---

विदूषकइति ॥ विदूषकः। विलोक्य - वीक्ष्य। वदति। भो वयस्य - हे सखे। वसन्तः - मधुः। किञ्चित् - ईषत्। परिवृत्तयौवनइव - परिगततारुण्यइव। प्रमदवने - उद्यानवने। लक्षयते - प्रदृश्यते॥

---

राजा ॥ यथाह भवान्॥

श्लो॥ अग्रे विकीर्णकुरवकफलजालकाभिद्यमान सहकारं।
परिणामसुख मिदमृतो रुत्सुकयति यौवनं चेतः॥७९॥

---

राजेति ॥ राजा। प्राह। भवान्। यथाह - तथ्यमेव ब्रवीति। अग्रइति ॥ अग्रे - पुरतः। विकीर्णकुरवकफलजालकभिद्यमानसहकारं - विकीर्णानाम् - व्याप्तानां। कुरवकाणाम् - एतन्नामकवृक्षाणां। फलजालकैः - फलसमूहैः। भिद्यमानः - मिश्रीक्रियमाणः। सहकारः - रसालः यत्रतादृशम्। ऋतोः - वसन्तस्य। इदम् - एतत्। परिणाममुखं - परिपाकप्रवणम्। यौवनम् - तारुण्यम्। चेतः - मनः। उत्सुकयति - उत्कण्ठांकरोति॥

---

विदू ॥ परिक्रम्य। भो अअं सो दिण्णणेवत्थोविअ कुसुमत्थवएहिं तवणीआसोओ। ओलोएदु भवं। छा ॥ … भो अयं स दत्तनेपथ्यइव कुसुमस्तबकै स्तपनीयाशोकः। अवलोकयतु भवान् ॥

---

विदूषकइति॥ विदूषकः। परिक्रम्य - किञ्चिद्गत्वा। वदति। भो - महाराज। अयं - पुरोवर्ती। सः - प्रसिद्धः। तपनीयाशोकः - एतन्नामकोवृक्षः। कुसुमस्तबकैः - पुष्पगुच्छैः। दत्तनेपथ्यः - अलङ्कृतइव। स्थितइतिशेषः। भवान्। अवलोकयतु - पश्यतु। एनमितिशेषः ॥

---

राजा ॥ स्थानेखलु प्रसवमन्थ रोऽभू यं दय मिदानी मनन्यसाधारणीं शोभा मुद्वहति पश्य ॥

श्लो ॥ सर्वाशोकलतानां प्रथमं सूचितवसन्तविभवानाम् ।
निर्वृत्तदोह देऽस्मिन् संक्रान्तानीव मुकुळानि ॥८०॥

---

राजेति॥ राजा। प्राह। प्रसवमन्थरः - पुष्पसान्द्रः। अभूत् - आसीत्। स्थानेखलु - युक्तमेव। यत् - यस्मात्। अयम् - एषतपनीयाशोकः। इदानीं - अद्य। अनन्यसाधारणीम् - अनितरसामान्याम्। शोभां - श्रियम्। उद्वहति - पुष्यति। पश्य - आलोकय। सर्वेति॥ प्रथमम् - आदौ। सूचितवसन्तविभवानाम् - ज्ञापितमधुसम्पत्तीनां। सर्वाशोकलतानाम् - समस्ताशोकशाखानांमध्ये। निर्वृत्तदोहदे - निष्पन्न कुसुमोत्पादकक्रियाविशेषे। अस्मिन् - तपनीयाशोके। मुकुळानि - कुड्मलानि। संक्रान्तानि - संयोजितानीव। स्थितानीत्यध्याहारः॥

---

विदू ॥ तह वीसद्धो होहि । अम्हासु तह उवगदेसुवि धारिणी पासपरिवत्तिअं माळविअं अणुमण्णेदि । छा ॥ तथा विस्रब्धोभव। अस्मासु तथा उपगतेष्वपि धारिणी पार्श्वपरिवर्तिकां माळविका मनुमन्यते ॥

---

विदूषकइति ॥ विदूषकः। वक्ति। राजन्। तथा - तेनप्रकारेण। विस्रब्धः - विश्वासयुक्तः। भव - एधि। धारिणी - एतन्नाम्नीपट्टमहिषी। अस्मासु। तथोपगतेषु - अतिसमीपस्थेषुसत्स्वपि। माळविकाम्। एतन्नामिकांबालिकां। पार्श्वपरिवर्तिकां - निकटस्थिताम्। अनुमन्यते - अङ्गीकरोति ॥ नभवतो दृष्टिपथा दपसारयतीत्याशयः ॥

---

राजा ॥ सहर्षम् । पश्यपश्य सखे ! ॥

श्लो ॥ मा मिय मभ्युत्तिष्ठति देवी विनया दनूत्थिता प्रियया।
विस्तृतहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥८१॥

---

राजेति ॥ राजा। सहर्षं - ससंतोषंयथातथा। प्राह। हेसखे - गौतम। पश्य - विलोकय। आदराद्विरुक्तिः। मामिति ॥ विस्तृतहस्तकमलया - विकसितकरारविन्दया। प्रियया - सख्यामाळविकया। अनूत्थिता - पश्चादनुगता। इयम् - एषा। देवी - पट्टमहिषी। नरेन्द्रलक्ष्म्या - नृपश्रिया। वसुमती-क्षोणीव। विनयात् - नम्रत्वात्। मां। अभ्युत्तिष्ठति - प्रत्युद्गच्छति ॥

---

ततःप्रविशति धारिणी माळविका परिव्राजिका विभवतश्च परिवारः॥

---

ततइति ॥ ततः - अनन्तरम्। धारिणी - एतन्नाम्नीपट्टमहिषी। माळविका - एतन्नामिकाबालिका। परिव्राजिका - पण्डितकौशिकीना

स्त्रीभिक्षुकी । विभवतः - ऐश्वर्यानुसारेण । परिवारः - परिजनश्च । प्रविशति - रङ्गस्थलं गच्छतीतिप्रत्येकान्वयः ॥

---

माळ ॥ आत्मगतम् । जाणामि णिमित्तं मह कोदुआळंकारस्स । तहवि मे हिअअं बिसिणीपत्तगदं विअ सळिळं वेवदि । दक्खिणेदरं णअणंअ बहुसो फुरइ । छा ॥ ... जानामि निमित्तं मम कौतुकालंकारस्य । तथापि मे हृदयं बिसिनीपत्रगतमिव सलिलं वेपते । दक्षिणेतरं नयनञ्च बहुशः स्फुरति ॥

---

माळविकेति ॥ माळविका । आत्मगतम् - स्वगतम् । वदति । मम । कौतुकालंकारस्य - कौतूहलरचितवेषस्य । निमित्तं - दोहदकरणेन तपनीयाशोकस्य सञ्जातकुसुमत्वेन पट्टमहिषी प्रसादरूपं कारणम् । जानामि - वेद्मि । तथापि - तद्ज्ञानेपि । बिसिनीपत्रगतं - नलिनीपर्णस्थं । सलिलम् - वारीव । मे - मम । हृदयम् - चित्तं । वेपते - कम्पते । दक्षिणेतरं - वामं । नयनम् - नेत्रञ्च । बहुशः - अनेकवारं । स्फुरति - स्पन्दते ॥ तथाचोक्तं वसन्तराजशाकुने ॥ भ्रूभागमध्ये प्रियसङ्गमस्स्यान्नासाक्षिमध्येच सहायलाभः । दृगन्तमध्यस्फुरणेऽर्थलाभोत्कण्ठे क्रमाद्विस्फुरते दृगादाविति ॥ पुंसां सदादक्षिणदेहभागे स्त्रीणांच वामावयवे प्रजातइतिच ॥

---

विदू ॥ भो वअस्स! विवाहणेवत्थेण सविसेसं खु सोहदि अत्तभोदी मालविआ । छा ॥ भो वयस्य! विवाहनेपथ्येन सविशेषंखलु शोभते ऽत्रभवती माळविका ॥

विदूषकइति ॥ विदूषकः । वदति । भोवयस्य - हेसखेराजन् । अत्रभवती - पूज्या । माळविका । विवाहनेपथ्येन - वैवाहिकप्रसाधनेन । सविशेषम् - सातिशयंयथातथा । शोभतेखलु - प्रकाशतेहि ॥

---

राजा ॥ पश्या म्येनाम् । एषा ॥

श्लो ॥ अनतिलम्बिदुकूलनिवासिनी
लघुभि राभरणैः प्रतिभातिमे ।
उडुगणै रुदयोन्मुखचंद्रिका
हतहिमैरिव चैत्रविभावरी ॥८२॥

---

राजेति ॥ राजा । प्राह । गौतम । एनां - माळविकां । पश्यामि - विलोकयामि । एषेत्यादि ॥ अनतिलम्बिदुकूलनिवासिनी - धृतनातिदीर्घक्षौमवसना । एषा - इयंमाळविका । लघुभिः - विरळैः । आभरणैः - अलंकारैः । उदयोन्मुखचन्द्रिका - अभ्युदयाभिमुखजयोत्स्ना । चैत्रविभावरी - मधुमाससितपक्षक्षपा । हतहिमैः - अपसारिततुषारैः । उडुगणैः - तारासमुदायैरिव । मे - मम । प्रतिभाति - प्रस्फुरति ॥

---

धारि ॥ उपेत्य । जेदुजेदु अज्जउत्तो । छा ॥ ... जयतुजयत्वार्यपुत्रः ॥

---

धारिणीति ॥ धारिणी - एतन्नाम्नीपट्टमहिषी । उपेत्य - समोपमागत्य । वक्ति । आर्यपुत्रः - भर्ता । जयतु - सर्वोन्नत्येनवर्तताम् । आदराद्विरुक्तिः ॥

---

विदू ॥ वढ्ढदु भोदी । छा ॥ वर्धतां भवती ॥

---

विदूषकइति ॥ विदूषकः । ब्रूते । भवती । वर्धतां - प्रवृद्धिं प्राप्नोतु ॥

---

परिव्राजिका ॥ विजयतां देवः ॥

---

परिव्राजिकेति ॥ परिव्राजिका । वक्ति । देवः - महाराजः । विजयताम् - सर्वाधिक्येनवर्तताम् । सू ॥ विपराभ्यांजेरि त्यात्मनेपदम् ॥

---

राजा ॥ भगवति ! अभिवादये ॥

---

राजेति ॥ राजा । प्राह । हेभगवति - पूज्येपरिव्राजिके । अभिवादये - नमामि ॥

---

परिव्राजिका ॥ सर्वाभीष्टसिद्धि रस्तु ॥

---

परिव्राजिकेति ॥ परिव्राजिका । वक्ति । महाराज । सर्वाभीष्टसिद्धिः - सकलाभीप्सितप्राप्तिः । अस्तु - भवतु । तुभ्यमितिशेषः ॥

---

देवी ॥ सस्मितम् । अज्जउत्त ! एस दे अम्हेहिं तरुणीजणसहाअस्स असोओ संकेदगेहको संकप्पिदो । छा ॥ ... आर्यपुत्र ! एष तेऽस्माभि स्तरुणीजनसहाय स्याशोक स्संकेतगृहक स्संकल्पितः ॥

---

देवीति ॥ देवी - पट्टमहिषी । सस्मितम् - समन्दहासंयथातथा । ब्रवीति । आर्यपुत्र - हेभर्तः । तरुणीजनसहायस्य - युवतीजनसहितस्य । ते - तव । एषः - अयम् । अशोकः - तपनीयाशोकः । संकेतगृहकः -

समयागारतुल्यः । सू॥ इवेप्रतिकृताविती वार्थे कन्प्रत्ययः । अस्माभिः । संकल्पितः - सम्यङ्निर्दिष्टः॥ अभीष्टजनसमागमहेतुत्वात्तत्त्वम् ॥

---

विदू ॥ भो आराहिओसि । छा ॥ भो आराधितोऽसि ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । भो - हेराजन् । आराधितः-तोषितोऽसि । नि ॥ आराधनं साधनेस्यादवाप्तौतोषणेपिचेत्यमरः॥ देव्येतिशेषः ॥

---

राजा ॥ सव्रीड मशोकमभितः परिक्रामन् ।

श्लो ॥ नायं देव्या भाजनत्वं ननेय
स्सत्काराणा मीदृशाना मशोकः ।
यस्सावज्ञो माधवश्री नियोगे
पुष्पै श्शंस त्यादरं त्वत्प्रयत्ने ॥८३॥

---

राजेति ॥ राजा । सव्रीडम् - सलज्जंयथातथा । अशोकमभितः - तपनीयाशोकस्योभयतः । सू॥ अभितःपरितइत्यादिनाद्वितीया॥ परिक्रामन् - सञ्चरन् । प्राह । नेति॥ अयम् - एषः । अशोकः - तपनीयाशोकः । ईदृशानाम् - एतादृशानाम् । देव्याः - पट्टमहिष्याः । सत्काराणाम् - सम्मानानाम् । भाजनत्वम् - पात्रताम् । ननेयोन - नप्रापणीयइतिन । किंतुप्रापणीयएव । यः - तपनीयाशोकः । माधवश्रीनियोगे - वसन्तलक्ष्म्यादेशे । सावज्ञः - परिभूतस्सन्नपि । त्वत्प्रयत्ने - त्वत्प्रयासे । पुष्पैः-कुसुमैः । आदरम् -आदृतिं । शंसति - कथयति । सूचयतीत्यर्थः॥

---

विदू ॥ भो वीसद्धो भविअ जोव्वणवदिं पेक्ख । छा ॥

भो विस्रब्धो भूत्वा यौवनवतीं प्रेक्षस्व ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । भो - हेराजन् । त्वं । विस्रब्धः - विश्वासयुक्तोभूत्वा । यौवनवतीं - तारुण्ययुक्ताम् । प्रेक्षस्व - पश्य ॥

---

धारि ॥ कां? । छा ॥ काम्? ॥

---

धारिणीति ॥ धारिणी - पट्टमहिषी । वक्ति । गौतम । कां - कांवा । पश्येतिवदसीतिवाक्याध्याहारः ॥

---

विदू ॥ तवणीआसोअस्स कुसुमसोहं । छा ॥ तपनीयाशोकस्य कुसुमशोभाम् ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । हेपट्टमहिषि । तपनीयाशोकस्य - एतन्नामकवृक्षस्य । कुसुमशोभां - पुष्पच्छविं । पश्येतिवदामीतिवाक्यशेषः ॥ विदूषकेण माळविकामुद्दिश्यैवेदमुक्तं । देवीसकाशे तु तदपह्नुतमितिज्ञेयम् ॥

---

सर्वे उपविशन्ति ॥

---

सर्वइति ॥ सर्वे - राजादयः । उपविशन्ति - निषीदन्ति ॥

---

राजा ॥ माळविकां विलोक्यात्मगतम् । कष्टःखलु सन्निधिवियोगः ॥

श्लो ॥ अहं रथांगनामेव प्रिया सहचरीव मे ।
अननुज्ञातसम्पर्का धारिणी रजनीव नौ ॥८४॥

---

राजेति ॥ राजा । माळविकां । विलोक्य - वीक्ष्य । आत्मगतम् - स्वगतम् । प्राह । किमिति । सन्निधिवियोगः - सन्निधौ - इष्टजनसान्निध्येपि । वियोगः - विरहः । कष्टःखलु - दुस्तरोहि । अहमिति॥ अहं । रथाङ्गनामा - चक्रवाकइव । मे - मम । प्रिया - प्रेयसीमाळविका । सहचरी - चक्रवाकसहधर्मिणीव । धारिणी - एतन्नाम्नीपट्टमहिषी । नौ - आवयोः । अननुज्ञातसम्पर्का - अनभ्युपगतसम्बन्धा । रजनी - निशीथिनीव । स्थितेति यथालिङ्गंसर्वत्राध्याहारः॥ समीपविच्छेदस्य क्लेशकरत्वंदृष्टान्तोविशदयति॥

---

प्रविश्यकञ्चुकी॥ विजयतां विजयतां देवः । अमात्यो विज्ञापयति । तस्मिन्काले विदर्भराजोपायने द्वे शिल्पदारिके मार्गपरिश्रमा दलघुशरीरे इतिकृत्वा नप्रवेशिते । सम्प्रति देवोपस्थानयोग्ये । तदाज्ञां देवो दातु मर्हतीति ॥

---

प्रविश्येत्यादि ॥ कञ्चुकी - कश्चनान्तःपुरप्रतिहारी । प्रविश्य - राजसमीपंप्राप्य । वदति । देवः - महाराजः । विजयताम् - सर्वातिशयेनवर्तताम् । आदराद्विरुक्तिः । देव । अमात्यः- सचिवः । विज्ञापयति - निवेदयति । किमिति । हे देव । विदर्भराजोपायने - विदर्भदेशाधीशोपदाभूते । द्वे - उभे । शिल्पदारिके - शिल्पकारिकेबालिके । मार्गपरिश्रमात् - पथिक्लेशात् । अलघुशरीरे - अस्वास्थ्ययुक्तदेहे । इति - अस्माद्धेतोः । कृत्वा - विचार्य । तस्मिन्काले - तत्समये । नप्रवेशिते - नप्रापिते । सम्प्रति - इदानीं । देवोपस्थानयोग्ये - राजसेवनार्हे । जातेइतिशेषः । देवः - राजा । तदाज्ञाम् - तयोःप्रवेशानुज्ञां । दातुम् । अर्हति - योग्योभवतीति ॥

---

राजा ॥ प्रवेशय ते ॥

---

राजेति ॥ राजा । प्राह । कञ्चुकिन् । ते - शिल्पदारिके । प्रवेशय - प्रापय ॥

---

कञ्चु ॥ यदाज्ञापयति देवः । इति निष्क्रम्य ताभ्यांसह प्रविशय । इतइत आगच्छतां भवत्यौ ॥

---

कञ्चुकीति ॥ कञ्चुकी । वक्ति । देवः - महाराजः । यदाज्ञापयति- यन्नियुङ्क्ते । तत्करोमीतिवाक्यशेषः । इति - एवमुक्त्वा । निष्क्रम्य - निर्गत्य । ताभ्यांसह - शिल्पदारिकाभ्यांसाकम् । प्रविशच - प्राप्य । आह । भवत्यौ । इतइतः - अनेनानेनपथा । आगच्छताम्-आयाताम् ॥

---

प्रथमा ॥ जनान्तिकम् । हळा रमणीए ! अपुव्वंविअ इमं राअउळं पविसन्तीए मे पसीददि हिअअब्भंतरसंगदो अप्पा । छा ॥ हला रमणीए ! अपूर्व मिवेदं राजकुलं पविशन्त्या मे प्रसीदति हृदयाभ्यन्तरसङ्गत आत्मा ॥

---

प्रथमेति ॥ प्रथमा - तयोराद्या । जनान्तिकम् - नियतश्राव्यं यथातथा । वदति । हळा -सखि । रमणीये ! अपूर्वम् - अदृष्टपूर्वमिव । इवेतिवाक्यालंकारे । इदम् - एतत् । राजकुलम् - नृपागारम् । नि ॥ सजातीयगणेगोत्रे गृहेपिकथितंकुलमितिविश्वः ॥ प्रविशन्त्याः -प्राप्नुवन्त्याः । मे - मम । हृदयाभ्यन्तरसङ्गतः - हृदन्तरसम्बद्धः । आत्मा - जीवः । नि ॥ आत्माजीवेधृतौदेहे स्वभावे परमात्मनीतिविश्वः ॥ प्रसीदति - प्रसन्नोभवति ॥

द्वितीया ॥ जोसिणिए ! महवि एव्वं । अत्थिक्खु लोअप्पवादो आआमि सुहं दुक्खं वा हिअअसमवत्था कहेदित्ति।
छा ॥ ज्योत्स्निके ! ममाप्येवम् । अस्तिखलु लोकप्रवादः आगामि सुखं दुःखं वा हृदयसमवस्था कथयतीति ॥

द्वितीयेति ॥ द्वितीया - प्रथमानन्तरा । कथयति । ज्योत्स्निके- एतन्नाम्निसखि ! ममापि । एवम् - इत्थम् । आत्माप्रसीदतीत्यर्थः । हृदयसमवस्था - मनोव्यापारः । आगामि - आयास्यत् । सुखं - शर्म । दुःखंवा - व्यथाश्च । कथयति - सूचयतीति । लोकप्रवादः - जनवादः । अस्तिखलु - विद्यतेहि ॥

प्रथ ॥ सच्चो दाणिं होदु । छा ॥ सत्य इदानीं भवतु ॥

प्रथमेति ॥ प्रथमा । वक्ति । इदानीं - सम्प्रति । सत्यः - यथार्थः । लोकप्रवादइतिशेषः । भवतु - अस्तु ॥

कञ्चु ॥ एष देव्यासह देव स्तिष्ठति । उपसर्पतां भवत्यौ॥

कञ्चुकीति । कञ्चुकी । ब्रवीति । भवत्यौ । उपसर्पतां - समीपङ्गच्छताम् । एषः - अयम् । देवः - राजा । देव्यासह - पट्टमहिष्यासाकं । तिष्ठति - वर्तते ॥

उभे उपसर्पतः ॥

उभेइति ॥ उभे - द्वेशिल्पदारिके । उपसर्पतः - समीपम्प्रामुतः ॥

माळविकां परिव्राजिकांच दृष्ट्वा चेट्यौ परस्पर मवलोकयत: ॥

माळविकामित्यादि ॥ चेट्यौ - शिल्पदारिके । माळविकां - एतन्नामिकांबालिकां । परिव्राजिकाम् - पण्डितकौशिकीञ्च । दृष्ट्वा - विलोक्य । परस्परम् - इतरेतरम् । अवलोकयत: - पश्यत: ॥

उभे ॥ प्रणिपत्य । जेदुजेदु भट्टा । जेदुजेदु भट्टिणी । छा ॥ ... जयतुजयतु भर्ता । जयतुजयतु भट्टिनी ॥

उभेइति ॥ उभे - शिल्पदारिके । प्रणिपत्य - नमस्कृत्य । वदत: । भर्ता - महाराज: । जयतु - सर्वोत्कर्षेणवर्तताम् । आदराद्विरुक्ति: । एवंभट्टिन्याअप्यूह्यम् ॥

राजा ॥ निषीदतम् ॥

राजेति ॥ राजा । प्राह । हे शिल्पदारिके । निषीदतम् - उपविशतम् । युवामितिशेष: ॥

उभे राजाज्ञया उपविष्टे ॥

उभेइति ॥ उभे - चेट्यौ । राजाज्ञया - नृपानुशासनेन । उपविष्टे - निषण्णे ॥

राजा ॥ कस्यां कलाया मभिविनीते भवत्यौ ॥

राजेति ॥ राजा । पृच्छति । भवत्यौ - युवां । कस्यांकळाया म - कस्मिन्शिल्पे । अभिविनीते - शिक्षिते ॥

---

उभे ॥ भट्टा ! संगीदए अब्भंतरम्ह । छा ॥ भर्तः ! सङ्गीतकाभ्यन्तरे स्वः ॥

---

उभेइति ॥ उभे - द्वे । वदतः । भर्तः - महाराज । आवाम् । सङ्गीतकाभ्यन्तरे - गानविद्याभ्यन्तरे । स्वः - भवावः । विनीतेइत्यध्याहारः ॥

---

राजा ॥ देवि गृह्यता मनयो रन्यतरा ॥

---

राजेति ॥ राजा । प्राह । देवि - राज्ञि । अनयोः - एतयोर्द्वयोर्मध्ये । अन्यतरा - एका । गृह्यताम् - स्वीक्रियतां । भवत्येतिशेषः ॥

---

धारि ॥ मालविए! इदो दक्खदरा संगीदसहाइणी दे का रुच्चदि । छा ॥ माळविके ! इतो दक्षतरा संगीतसहायिनी ते का रोचते ॥

---

धारिणीति ॥ धारिणी । वक्ति । हे माळविके । इतः - अनयोर्मध्ये । दक्षतरा - अतीवसमर्था । का । ते - तुभ्यम् । सङ्गीतसहायिनी - गानसहकारिणी । रोचते - प्रियाभवति ॥

---

उभे ॥ माळविकां दृष्ट्वा । अम्मो भट्टिदारिआ । जेदुजेदु भट्टिदारिआ । इति प्रणिपत्य तयासह बाष्पं विसृजतः । छा ॥ ... अहह भर्तृदारिका । जयतुजयतु भर्तृदारिका ॥

---

उभेइति ॥ उभे - द्वेशिल्पदारिके । माळविकां । दृष्ट्वा - विलोक्य । वदतः । अहहेत्याश्चर्ये । भर्तृदारिका - राजपुत्री । अत्रस्थितेतिशेषः । भर्तृदारिका - क्षितिपालसुता । जयतु - सर्वोत्कर्षेणवर्ततां । आदराद्विरुक्तिः । इति - एवमुक्त्वा । प्रणिपत्य - तस्यैप्रणम्य । तयासह - माळविकयासाकम् । बाष्पं - नेत्रजलम् । विसृजतः - त्यजतः ॥

---

सर्वे सविस्मय मवलोकयन्ति ॥

---

सर्वइति ॥ सर्वे - तत्रत्याराजादयः । सविस्मयं - साश्चर्ययथातथा । अवलोकयन्ति - पश्यन्ति । ताइतिशेषः ॥

---

राजा ॥ केवा भवत्यौ ? का वेयम् ? ॥

---

राजेति ॥ राजा । प्राह । भवत्यौ - युवां । केवा । इयम् - एषामाळविका । कावा ॥

---

प्रथ ॥ अम्हाणं भट्टिदारिआ । छा ॥ आवयो र्भर्तृदारिका॥

---

प्रथमेति ॥ प्रथमा । कथयति । राजन् । आवयोः । भर्तृदारिका - राजपुत्री । इयमितिशेषः ॥

---

राजा ॥ कथमिव ? ॥

---

राजेति ॥ राजा । प्राह । कथमिव - केनवाप्रकारेण ॥

---

उभे ॥ सुणादु भट्टा । जो सो भट्टिणा विजअदंडेहिं वि

दण्डभणाहं वसीकरिअ बंधणादो मोइदो कुमारो माहवसेणो णाम । तस्स इअं कणीअसी बहिणी मालबिआणाम । छा ॥ शृणोतु भर्ता । य स्स भर्त्रा विजयदण्डै र्विदर्भनाथं वशीकृत्य बन्धना न्मोचितः कुमारो माधवसेनोनाम । त स्येयं कनीयसी भगिनी माळविकानाम ॥

---

उभेइति ॥ उभे । वदतः । भर्ता - महाराजः । शृणोतु - आकर्णयतु । सः - प्रसिद्धः । भर्त्रा - राज्ञा । विजयदण्डैः - जयप्रधानसैन्यैः । विदर्भनाथं - विदर्भदेशाधीशं । वशीकृत्य - स्वायत्तंकृत्वा । माधवसेनोनाम - माधवसेनाख्यः । यः । कुमारः - बालकः । बन्धनात् - कारागारात् । मोचितः - मोक्षितः । तस्य - माधवसेनस्य । इयं - एषा । माळविकानाम - एतन्नाम्नी । कनीयसी - कनिष्ठा । भगिनी - स्वसा ॥

---

धारि ॥ कहं राअदारिआ इअं ? । चंदणंखु मए पादुआवदेसेण दूसिदं । छा ॥ कथं राजदारि केयम् ? । चन्दनंखलु मया पादुकापदेशेन दूषितम् ॥

---

धारिणीति ॥ धारिणी । वदति । इयम् - एषाबालिका । राजदारिकाकथम् - नृपसुताकिं । कथमितिप्रश्ने । मया । चन्दनम् - चन्दनदारु । पादुकापदेशेन - पादुकानिर्माणनिमित्तेन । दूषितंखलु - कदर्थितंहि ॥

---

राजा ॥ अ थात्रभवती कथ मित्थंभूता ॥

---

राजेति ॥ राजा । प्राह । अथ - ततःपरम् । अत्रभवती - पूजयामाळविका । कथम् - केनवाहेतुना । इत्थंभूता - इमंप्रकारंप्राप्ता ॥

माळ ॥ निश्श्वस्य स्वात्मगतम् । विहिणिओएण । छा ॥ ... विधिनियोगेन ॥

---

माळविकेति ॥ माळविका । निश्श्वस्य - निश्श्वासंकृत्वा । आत्मगतम् - स्वगतंयथातथा । वक्ति । विधिनियोगेन - दैवाज्ञया । इत्थंभूतास्मीतिवाक्यशेषः ॥

---

द्विती ॥ सुणादु भट्टा । दाआदवस गदे भट्टिदारए माहवसेणे तस्स अमच्चेण अज्जसुमदिणा अम्हारिसं परिअणं उज्झिअ गूढं आणीदा एसा । छा ॥ शृणोतु भर्ता । दायादवशङ्गते भर्तृदारके माधवसेने तस्यामात्ये नार्यसुमतिना अस्मादृशं परिजन मुज्झित्वा गूढ मानीतैषा ॥

---

द्वितीयेति ॥ द्वितीया । कथयति । भर्ता - राजा । शृणोतु- आकर्णयतु । माधवसेने - एतन्नामके । भर्तृदारके - राजपुत्रे । दायाद वशम् - ज्ञात्यायत्तत्वम् । गते - प्राप्तेसति । आर्यसुमतिना - एतन्नाम्ना । तस्य - माधवसेनस्य । अमात्येन - मन्त्रिणा । अस्मादृशम् - अस्मत्सदृशम् । परिजनम् - भृत्यजनम् । उज्झित्वा - त्यक्त्वा । एषा - माळविका । गूढं - प्रच्छन्नंयथातथा । आनीता - आगमिता ॥

---

राजा ॥ श्रुतपूर्वं मयैतत् । तत स्ततः ॥

---

राजेति ॥ राजा । प्राह । मया । एतत् - इदं । श्रुतपूर्वं - पूर्वमाकर्णितम् । ततस्ततः - अनन्तरम् । किंवृत्तमितिशेषः । आदराद्विरुक्तिः ॥

द्विती ॥ भट्ट! अदोवरं णआणामि । छा ॥ भर्त रतःपरं नजानामि ॥

द्वितीयेति ॥ द्वितीया । वक्ति । हे भर्तः - राजन् । अतःपरम् - एतदनन्तरवृत्तान्तम् । नजानामि - नवेद्मि ॥

परि ॥ अतःपर महं मन्दभागिनी कथयिष्यामि ॥

परिव्राजिकेति ॥ परिव्राजिका । वदति । मन्दभागिनी - भाग्यहीना । अहं । अतःपरम् - इतोऽनन्तरोदन्तं । कथयिष्यामि-वक्ष्यामि ॥

उभे ॥ भट्टिदारिए! अज्जकोसिईएविअ सरसंजोगो । णं साएव्व । छा ॥ भर्तृदारिके! आर्यकौशिक्याइव स्वरसंयोगः । ननु सैव ॥

उभेइति ॥ उभे । ब्रूतः । हे भर्तृदारिके - राजपुत्रिकेमाळविके । स्वरसंयोगः - कण्ठस्वरसंबन्धः । आर्यकौशिक्याः - पूज्यायाःपण्डितकौशिक्याइव । आकर्ण्यतइतिशेषः । सैवननु - पण्डितकौशिक्येवकिम् । नि ॥ प्रश्नावधारणानुज्ञा नुनयामन्त्रणेननन्वित्यमरः ॥

माळ ॥ अहइं । छा ॥ अथकिम् ॥

माळविकेति ॥ माळविका । वक्ति । अथकिं - तथैवेत्यर्थः ॥

उभे ॥ जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि । भअवदि! णमो दे । छा ॥ यतिवेषधारिण्यार्यकौ

शिकी दुःखेन विभाव्यते। भगवति ! नमस्ते ॥

---

उभेइति ॥ उभे । वदतः । माळविके । यतिवेषधारिणी - धृतपरिव्राजिकावेषा । आर्यकौश्शिकी - पण्डितकौशिकी । दुःखेन - क्लेशेन । विभाव्यते - विशेषेणज्ञायते । हे भगवति - आर्यकौशिकि । ते - तुभ्यं । नमः - अभिवादः ॥

---

परि ॥ स्वस्ति भवतीभ्याम् ॥

---

परिव्राजिकेति ॥ परिव्राजिका । वक्ति । भवतीभ्यां - युवाभ्याम् । स्वस्ति - शुभम् । भवत्वितिशेषः ॥

---

राजा ॥ कथमाप्तवर्गोऽयं भगवत्याः ॥

---

राजेति ॥ राजा । प्राह । भगवत्याः - पूज्यायाःपरिव्राजिकायाः । अयम् - एषजनः । आप्तवर्गःकथम् - इष्टसमूहःकिम् ॥

---

परि ॥ एवमेतत् ॥

---

परिव्राजिकेति ॥ परिव्राजिका । वदति । राजन् । एतत् - भवदुक्तम् । एवम् - इत्थमेव । नि ॥ इवेत्थमर्थयोरेव मित्यमरः ॥

---

विदू ॥ देण कहेदु दाणिं भअवदी अत्तभोदीवुत्तंतंदाव असेसं । छा ॥ तेन कथय त्विदानीं भगव त्यत्रभवतीवृत्तान्तं ताव दशेषम् ॥

---

विदूषकइति ॥ विदूषकः । वक्ति । तेन हेतुना । भगवती -

पूज्यापण्डितकौशिकी । अशेषम् - अखिलम् । अत्रभवतीवृत्तान्तम् । अत्रभवत्याः - पूज्यायामाळविकायाः । वृत्तान्तम् - उदन्तं । तावत् - समग्रंयथातथा । इदानीं - अद्य । कथयतु - वदतु ॥

---

परि ॥ सवैक्लब्यम् । ताव च्छ्रूयतां । माधवसेनसचिवं म माग्रजं सुमति मवगच्छ ॥

---

परिव्राजिकेति ॥ परिव्राजिका । सवैक्लब्यम् - सचित्तवैकल्यं यथातथा । वक्ति । तावत् - इदानीं । त्वया । श्रूयताम् - आकर्ण्यताम् । तद्वृत्तान्तइतिशेषः । माधवसेनसचिवम् - माधवसेनाख्यनृपमन्त्रिणं । सुमतिं । मम । अग्रजं - ज्येष्ठभ्रातरम् । अवगच्छ - अवेहि ॥

---

राजा ॥ उपलक्षितः । तत स्ततः ॥

---

राजेति ॥ राजा । प्राह । उपलक्षितः - ज्ञातः । मयेतिशेषः । ततस्ततः - अनन्तरंकिंजातमित्यध्याहारः ॥

---

परि ॥ स इमां तथागतभ्रातृकां मयासार्थ मपवाह्य भ वत्सम्बन्धापेक्षया पथिकसार्थं विदिशागामिन मनुप्रविष्टः ॥

---

परिव्राजिकेति ॥ परिव्राजिका । कथयति । सः - सुमतिः । तथागतभ्रातृकाम् । तथागतः - तादृशंप्रकारंप्राप्तः । शत्रुवशङ्गतइत्यर्थः । भ्राता - सोदरोयस्यास्तां । सू ॥ नद्यृतश्चेतिकप् ॥ इमां - एतांमाळविकां । मयासार्थं-मयासह । अपवाह्य - अपसार्य । भवत्सम्बन्धापेक्षया - त्वत्संबंधेच्छया । विदिशागामिनं - एतन्नामकनगरंगमिष्यन्तं । पथिकसार्थं अध्वगजनसङ्घम् । अनुप्रविष्टः - अनुसृत्यप्राप्तः ॥

राजा ॥ तत स्ततः ॥

राजेति ॥ राजा । प्राह । ततस्ततः - अनंतरंकिमभूदितिशेषः ॥

परि ॥ स चाटव्यन्तरे निविष्टो गताध्वा वणिग्गणइव विश्रमितु मारब्धः ॥

परिव्राजिकेति ॥ परिव्राजिका । वक्ति । सः - सुमतिश्च । गताध्वा - अतिक्रान्तमार्गः । वणिग्गणः - वाणिजसंघइव । अटव्यन्तरे - गहनमध्ये । निविष्टः - स्थितस्सन् । विश्रमितुम् - अध्वक्लेशमपनेतुम् । आरब्धः - उपक्रान्तः ॥

राजा ॥ तत स्ततः ॥

राजेति ॥ राजा । प्राह । ततस्ततः - अथकिमभवदितिशेषः ॥

परि ॥ ततः । किंचान्यत् ॥

श्लो ॥ तूणीरपट्ट परिणद्ध भुजान्तराळ
मापार्ष्णिलम्बि शिखिबर्ह कलाप धारि ।
कोदण्डपाणि निनद त्प्रतिरोधकाना
मापातदुष्प्रसह माविरभू दनीकम् ॥८५॥

परिव्राजिकेति ॥ परिव्राजिका । वदति । ततः - अनन्तरम् । अन्यत् - इतरच्च । किं । अस्तीतिशेषः । तूणीरेति ॥ तूणीरपट्टपरिणद्धभुजान्तराळम् । तूणीरस्य - निषङ्गस्य । पट्टेन - पट्टिकया । परिणद्धं -

परिबद्धं। भुजान्तराळम् - स्कन्धान्तरंयस्यतत्तथोक्तम्। आपार्ष्णिल म्बिशिखिबर्हकलापधारि। आपार्ष्णि - पार्ष्णिप्रदेशपर्यंतं। नि॥ तद्‌ग्रन्थी घुटिकेगुल्फौ पुमान्पार्ष्णिस्तयोरध इत्यमरः॥ लम्बतइतितथोक्तं। शि खिबर्हं - मयूरपिञ्छमेव। कलापम् - अलंकारं। धारयति - बिभर्तीति तद्धारि। सू॥ आकेस्तच्छीलेतिणिनिः॥ कोदण्डपाणि - धनुर्धारि। प्रति रोधकानाम् - तस्कराणां। अनीकम् - सैन्यम्। आपातदुष्प्रसहं। आ पातेन - अभितोव्याप्तया। दुष्प्रसहम् - अत्यंतंसोढुमशक्यंयथातथा। नि नदत् - ध्वनुत्सत्। आविरभूत् - प्रादुरासीत्। नि॥ प्रकाशे प्रादुराविस्स्या दित्यमरः॥

---

माळविका भयं रूपयति॥

---

माळविकेति॥ माळविका। भयं - भीतिं। रूपयति - अभिनयति॥

---

विदू॥ भोदि! माभाआहि। अदिक्कंतंखु अत्तभोदी कहेदि। छा॥ भवति! माबिभीहि। अतिक्रान्तंख त्वत्रभवती कथयति॥

---

विदूषकइति॥ विदूषकः। वदति। भवति - पूजयेमाळविके। त्वं। माबिभीहि - भयंनप्राप्नुहि। कुतः। अत्रभवती - पूज्यापरिव्राजिका। अतिक्रान्तम् - अतीतं। वृत्तान्तमितिशेषः। कथयतिखलु - वदतिहि॥

---

राजा॥ तत स्ततः॥

---

राजेति ॥ राजा । प्राह । ततस्ततः - अतउपरिकिमासीदिति ॥

परि ॥ ततो मुहूर्तबद्धायुधा स्ते पराङ्मुखीभूता स्सार्थ वाहयोद्धार स्तस्करैः ॥

परिव्राजिकेति ॥ परिव्राजिका । कथयति । राजन् । ततः - अनन्तरम् । ते -प्रक्रान्ताः । सार्थवाहयोद्धारः - वणिग्भटाः । नि ॥ वैदेहकस्सार्थवाहो नैगमोवाणिजोवणिक् ॥ भटायोधाश्चयोद्धारइतिचामरः । मुहूर्तबद्धायुधाः - क्षणमात्रंधृतशस्त्रास्सन्तः । तस्करैः - पाटच्चरैः । पराङ्मुखीभूताः - विमुखीकृताः ॥

राजा ॥ भगवति! हन्त अतः कष्टतर मिदानीं श्रोतव्यं॥

राजेति ॥ राजा । प्राह । हेभगवति - पूज्येपरिव्राजिके। हन्तेति विषादे । अतः- ततःपरम् । श्रोतव्यम् - आकर्णनीयम् । कष्टतरम् - अतिदुस्सहं । भवतोतिशेषः ॥

परि ॥ तत स्स मत्सोदर्यः ॥

श्लो ॥ इमां परीप्सु र्दुर्जातेः पराभिभवकातराम् ।
भर्तृप्रियः प्रियै र्भर्तु रानृण्य मसुभि र्गतः ॥८६॥

परिव्राजिकेति ॥ परिव्राजिका । वदति । ततः- अनन्तरम् । भर्तृप्रियः - नृपप्रियः । सः - प्रसिद्धः । मत्सोदर्यः - ममभ्रातासुमतिः । दुर्जातेः - दुष्टाचोरकुलात् । पराभिभवकातराम् । परेषां - शत्रूणाम् । अभिभवात् - पराभवात्। कातराम् - अधीराम् । इमां - माळविकां । परीप्सुः - पर्याप्तुम् । परित्रातुमिच्छुस्सन् । नि ॥ पर्याप्तिस्स्यात्परित्राणं

हस्तधारणमित्यपी त्यमरः ॥ प्रियैः - इष्टैः । असुभिः - प्राणैः । भर्तुः - नृपस्य । आनृण्यम् - अनृणत्वं । गतः - प्राप्तः ॥

---

प्रथ ॥ आ हा हदो सुमदी णं । छा ॥ आः हा हत स्सुमति र्ननु ॥

---

प्रथमेति ॥ प्रथमा । वक्ति । आइतिपीडायाम् । हेतिविषादे । सुमतिः - एतन्नामानृपसचिवः । हतोननु - हिंसितःकिम् ॥

---

द्विती ॥ अदोक्खु भट्टिदारिआए इअं समवत्था संवुत्ता । छा ॥ ततःखलु भर्तृदारिकाया इयं समवस्था संवृत्ता ॥

---

द्वितीयेति ॥ द्वितीया । ब्रूते । ततःखलु - तस्मादेवकारणात् । भर्तृदारिकायाः - राजपुत्रिकायाः । इयं - एवंविधा । समवस्था - दशा । संवृत्ता - सम्प्राप्ता ॥

---

परिव्राजिका बाष्पं विसृजति ॥

---

परिव्राजिकेति ॥ परिव्राजिका । बाष्पं - नेत्रजलं । विसृजति - विमुञ्चति ॥

---

राजा ॥ भगवति ! तनुत्यजा मीदृशी लोकयात्रा । नशोच्य स्तत्रभवान् सफलीकृत भर्तृपिण्ड स्तपस्वी ॥

---

राजेति ॥ राजा । प्राह । हेभगवति - परिव्राजिके । तनुत्यजाम् - शरीरत्यागंकुर्वतां । जनानामितिशेषः । लोकयात्रा - लोकेगतिः । प्रपञ्चव्यापारइत्यर्थः । ईदृशी - एतादृशी । सफलीकृतभर्तृपिण्डः - सप्र

भोजनीकृतराजौदनः । तपस्वी - दीनः । तत्रभवान् - पूज्यस्सुमतिः । नशोच्यः - शोकार्होनभवति ॥

---

परि ॥ ततोऽहं मोह मुपागता याव त्संज्ञां प्रतिलभे ताव दियं दुर्लभदर्शना संवृत्ता ॥

---

परिव्राजिकेति ॥ परिव्राजिका । वक्ति । ततः - अनन्तरम् । अहं । मोहमुपागता - मूर्छितासती । यावत् - यावताकालेन । संज्ञां - चेतनां । नि ॥ संज्ञास्या चेतना नामहस्ताद्यै श्चार्थसूचने त्यमरः ॥ प्रतिलभे - प्राप्नोमि । तावत् - तस्मिन्नेवकाले । इयम् - एषामाळविका । दुर्लभदर्शना - दुष्प्रापप्रेक्षणा । संवृत्ता - जाता ॥

---

राजा ॥ महत्खलु कुच्छ्र मनुभूतं तत्रभवत्या ॥

---

राजेति ॥ राजा । प्राह । तत्रभवत्या - पूज्यया । त्वयेतिशेषः। महत् - प्रभूतम् । कृच्छ्रम् - कष्टम् । अनुभूतंखलु - उपलब्धंहि । नि ॥ उपलम्भस्त्वनुभव इत्यमरः ॥

---

परि ॥ ततो भ्रातु श्शरीर मग्निसा त्कृत्वा पुनर्नवीकृत दुःखया मया त्वदीयं देश मवतीर्य इमे काषाये गृहीते ॥

---

परिव्राजिकेति ॥ परिव्राजिका । वक्ति । ततः - अनन्तरम् । भ्रातुः - सोदर्यस्य । शरीरं - कळेबरम् । अग्निसात्कृत्वा - वह्न्यधीनंविधाय । पुनः - भूयः । नवीकृतदुःखया - नूतनभूतसमस्तखेदया । मया । त्वदीयम् - त्वत्संबन्धिनम् । देशम् - जनपदम् । अवतीर्य - प्राप्य । इमे । - एते । काषाये - यत्युचितकाषायशाटिके । गृहीते - धृते ॥

---

राजा ॥ युक्त स्सज्जन स्यैष पन्थाः ॥ तत स्ततः ॥

---

राजेति ॥ राजा । प्राह । सज्जनस्य - विद्वज्जनस्य । एषप न्थाः- अयंमार्गः । युक्तः - समुचितः । ततस्ततः - अनन्तरम् । किंवृत्त मितिशेषः ॥

---

परि ॥ सेय माटविकेभ्यो वीरसेनं । वीरसेना द्देवीं गता । देवीगृहे लब्धप्रवेशया मया चानन्तरं दृष्ट त्येव मवसानं कथायाः ॥

---

परिव्राजिकेति ॥ परिव्राजिका । कथयति । सेयम् - सैषा, माळविका । आटविकेभ्यः - आरण्यकजनेभ्यः । आटविकान्सहायीकृत्ये त्यर्थः । सू ॥ल्यब्लोपेकर्मण्यधिकरणेचेतिकर्मणिपञ्चमी ॥ वीरसेनम् - एतन्नामानंसेनापतिम् । वीरसेनात् । देवीं - पट्टमहिषीं । गता - प्राप्ता । देवीगृहे- पट्टमहिषीभवने । लब्धप्रवेशया - प्राप्तास्थित्या । मया । अनन्तरम् - तदुपरि । दृष्टा - प्रेक्षिताच । माळविकेतिशेषः । कथायाः - एतस्यवृत्तान्तस्य । इत्येवम् - इदं । अवसानम् - परिसमाप्तिः ॥

---

माळ ॥ आत्मगतम् । किणुक्खु भट्टा सांपदं भणादि । छा ॥ … किंनुखलु भर्ता साम्प्रतं भणति ॥

---

माळविकेति ॥ माळविका । आत्मगतम् - स्वगतंयथातथा । वक्ति । भर्ता - राजा । साम्प्रतम् - अधुना । किंनु - किंवा । भणति खलु - वदतिवा ॥

---

राजा ॥ अहो परिभवोपहारिणो विनिपातः । कुतः ॥

श्लो ॥ प्रेष्यभावेन ना मेयं देवीशब्दक्षमासती ।
स्नानीयवस्त्रक्रियया पत्रोर्णं वो पयुज्यते ॥८७॥

---

राजेति ॥ राजा । प्राह । परिभवोपहारिणः । परिभवे - दुःखे सति । उपहारिणः-उपकारकस्य । दैवस्येतिशेषः । विनिपातः - आगन्तु कोपस्थितिः । अहो - आश्चर्यं । कुतः - कस्मादितिचेत् । प्रेष्येति ॥ देवीशब्दक्षमा - पट्टमहिषीशब्दयोग्यासती । इयम् - एषामाळविका । प्रेष्यभावेन - परिचारकत्वेन । स्नानीयवस्त्रक्रियया - स्नानार्हचेलकृत्येन । पत्रोर्णंवा - धौतकौशेयमिव । नि ॥ पत्रोर्णंधौतकौशेयम् । वास्याद्विकल्पोपमयो रेवार्थेऽपि समुच्चय इतिचामरः ॥ उपयुजयते - विनियुजयते किमितिकाकुः ।

---

धारि ॥ भअवदि ! तुए अहिजणवदिं मालविअं अणाचक्खंतीए असंपदं किदं । छा ॥ भगवति ! त्व याभिजनवतीं माळविका मनाचक्षाणया असांप्रतं कृतम् ॥

---

धारिणीति ॥ धारिणी । वदति । हे भगवति - पूज्येपरिव्राजिके । माळविकां । अभिजनवतीं - कुलीनाम् । अनाचक्षाणया - अवदन्त्या । त्वया । असाम्प्रतम् - अयुक्तम् । कृतम् - आचरितम् ॥

---

परि ॥ शान्तं पापम् । कारणेनखलु मया नैर्घृण्य मवलम्बितम् ॥

---

परिव्राजिकेति ॥ परिव्राजिका । वक्ति । शान्तम्पापम् - हा । तथानवक्तव्य मित्यर्थः । कारणेनखलु - केनचिन्निमित्तेनैव । मया । नैर्घृण्यं - निर्दयत्वम् । अवलम्बितम् - आश्रितम् ॥

धारि ॥ किंविअ तं कारणं ?। छा ॥ किमिव त त्कारणं॥

धारिणीति ॥ धारिणी । ब्रवीति । तत्कारणम् - भवदुक्तंनिमित्तं । किमिव - किंवाभवेदित्यध्याहारः ॥

परि ॥ इयं पितरि जीवति केनापि देवयात्रागतेन शिवादेशकेन साधुना मत्समक्षं व्यादिष्टा । वत्सरमात्र मियं प्रेष्यभाव मनुभूय तत स्सदृशभर्तृगामिनी भविष्यतीति । त देवंभाविन मादेश मस्या स्त्वत्पादशुश्रूषया परिणमन्त मवेक्ष्य कालप्रतीक्षया मया साधु कृतमिति पश्यामि ॥

परिव्राजिकेति ॥ परिव्राजिका । कथयति । पितरि - जनके। जीवति - जीवित्वास्थितेसति । देवयात्रागतेन - देवयात्रार्थमायातेन । शिवादेशकेन - एतन्नामकेन । केनापि - केनचित् । साधुना - सज्जनेन । मत्समक्षम् - ममपुरतः । इयम् - एषामाळविका । व्यादिष्टा - संनियुक्ता । किमिति । वत्सरमात्रम् - अब्दपरिमितं । प्रेष्यभावम् - परिचारकभावम् । अनुभूय - उपभुज्य । इयं - माळविका । ततः - अनन्तरं। सदृशभर्तृगामिनी - समीचीनवरयायिनी । भविष्यति - सम्पत्स्यतइति । तत् - तस्मात् । त्वत्पादशुश्रूषया- त्वच्चरणसेवया । परिणमन्तं - परिणामं गच्छन्तम् । एवंभाविनम् -इत्थंभविष्यन्तम् । अस्याः - माळविकायाः। आदेशम् - नियोगम् । अवेक्ष्य - निरीक्ष्य । कालप्रतीक्षया - समयंनिरीक्ष्यस्थितया । मया । साधुकृतम् - युक्तमेवकृतमिति । पश्यामि - सम्भावयामि ॥

कञ्चु ॥ देव! अमात्यो विज्ञापयति। विदर्भगत मनुष्ठेय मवधारित मस्माभिः। देवस्यताव दभिप्रायं श्रोतुमिच्छामीति ॥

---

कञ्चुकीति ॥ कञ्चुकी । वक्ति । हे देव - राजन् । विदर्भगतम् - विदर्भदेशस्थं । अनुष्ठेयम् - कृत्यम् । अस्माभिः । अवधारितं - निश्चितम् । किमिति । देवस्यतावत् - राज्ञस्तु । अभिप्रायम् - आशयं। श्रोतुम् - आकर्णयितुं । इच्छामि - वाञ्छामीति ॥

---

राजा ॥ मौद्गल्य! तत्रभवतो र्भ्रात्रो र्यज्ञसेनमाधवसेनयो र्द्वैराज्य मिदानी मवस्थापयितुकामोऽस्मि ॥

श्लो ॥ तौ पृथ ग्वरदाकूले शिष्टा मुत्तरदक्षिणे ।
नक्तंदिवं विभ ज्योभौ शीतोष्णकिरणाविव ॥८८॥

---

राजेति ॥ राजा । प्राह । हे मौद्गल्य-एतन्नामककञ्चुकिन् । तत्रभवतोः - पूज्ययोः । यज्ञसेनमाधवसेनयोः - एतदाख्ययोः । भ्रात्रोः- सोदर्ययोः । द्वैराज्यं - द्विराजत्वम् । विभक्तराज्यमित्यर्थः । इदानीं - अद्य । अवस्थापयितुकामः-संस्थापयितुमनाः । तुंकाममनसोरपीतिमकारलोपः । अस्मि - भवामि ॥ ताविति ॥ तौ - यज्ञसेनमाधवसेनौ । नक्तं दिवं - यामिनीदिवसयोः । विभज्य - विभागंकृत्वा । उभौ - द्वौ । शीतोष्णकिरणौ - चन्द्रादित्याविव । उत्तरदक्षिणे - उत्तरस्यां दक्षिणस्यांच दिशिस्थिते । वरदाकूले - वरदाख्यनदीतटे । पृथक् - भिन्नंयथातथा । शिष्टां - परिपालयताम् ॥ वरदानदींसी माभूतांकृत्वा उत्तरदक्षिणेतयोः राज्यं विभक्त मस्त्वित्यर्थः ॥

---

कञ्चु ॥ देव ! एव ममात्यपरिषद्दे विज्ञापयामि ॥

---

कञ्चुकीति ॥ कञ्चुकी । वक्ति । हे देव - महाराज । एवं - भवदुक्तप्रकारेण । अमात्यपरिषदे - मन्त्रिसंसदे । विज्ञापयामि - निवेदयामि ॥

---

राजा ॥ अंगुल्यानुमन्यते ॥

---

राजेति ॥ राजा । अंगुल्या - करशाखया । अनुमन्यते - अङ्गीकरोति ॥

---

निष्क्रान्तः कञ्चुकी ॥

---

निष्क्रान्तइति ॥ कञ्चुकी । निष्क्रान्तः - निर्गतः ॥

---

प्रथ ॥ जनान्तिकम् । भट्टिदारिए ! दिठ्ठिआ भट्टिदारओ अद्धरज्जे पडिठ्ठं गमिस्सदि । छा ॥ ... भर्तृदारिके ! दिष्ट्या भर्तृदारकोऽर्धराज्ये प्रतिष्ठां गमिष्यते ॥

---

प्रथमेति ॥ प्रथमा । जनान्तिकम् - नियतश्राव्यंयथातथा । वक्ति । हे भर्तृदारिके - राजकुमारिमाळविके । दिष्ट्या - भागधेयेन । भर्तृदारकः - राजपुत्रोमाधवसेनः । अर्धराज्ये - राज्यस्यार्धभागे । प्रतिष्ठां - स्थितिम् । गमिष्यते - प्रापयिष्यते । राज्ञेतिशेषः ॥

---

माळ ॥ एदंदाव बहुमणिदव्वं जं जीविदसंसआदो विमुत्तो । छा ॥ एतत्ताव द्बहुमन्तव्यं य ज्जीवितसंशया द्विमुक्तः॥

---

माळविकेति ॥ माळविका । वदति । एतत्तावत् - इदमेव । बहुमन्तव्यम् - बहुमानंप्रापयितव्यम् । यत् - यस्मात्कारणात् । जीवितसंशयात् - प्राणसन्देहात् । विमुक्तः - विनिर्मुक्तः ॥

---

पुनःप्रविश्य कञ्चुकी ॥ विजयतां देवः । अमात्यो देवस्य विज्ञापयति । कल्याणी देवस्य बुद्धिः । मन्त्रिपरिषदोऽ प्येतदेव दर्शनम् । कुतः ॥

श्लो ॥ द्विधा विभक्तां श्रिय मुद्वहन्तौ
धुरं रथाश्वाविव संग्रहीतुः ।
तौ स्थास्यत स्ते नृपते ! निदेशे
परस्परावग्रह निर्विकारौ ॥८९॥

---

पुनरिति ॥ कञ्चुकी । पुनः - भूयः । प्रविश्य - प्राप्य । वक्ति । देवः - महाराजः । विजयताम् - सर्वोत्कर्षेण वर्तताम् । अमात्यः- सचिवः । देवस्य - राज्ञः । विज्ञापयति - निवेदयति । देवस्य - महाराजस्य । बुद्धिः - मनीषा । कल्याणी - शुभा । अतीवनिपुणेत्यर्थः । मन्त्रिपरिषदः - अमात्यवर्गस्यापि । एतत् - इदमेव । दर्शनम् - निर्णयः । कुतः - कस्मादितिचेत् । द्विधेति ॥ हे नृपते - राजन् । द्विधा - प्रकारद्वयेन । विभक्तां - विभजयदत्ताम् । संग्रहीतुः - संयन्तुः । धुरं - यानमुखं । रथाश्वौ - स्यन्दनवाजिनाविव । उद्वहन्तौ - धारयन्तौ । तौ - यज्ञसेन माधवसेनौ । परस्परावग्रहनिर्विकारौ । परस्परावग्रहे - युद्धादिनाअन्योन्याक्रमणे । निर्विकारौ - निर्वैरौसन्तौ । ते - तव । निदेशे - शासने । स्थास्यतः - वर्तिष्येते ॥

---

राजा ॥ तेनहि मन्त्रिपरिषदं ब्रूहि सेनान्ये वीरसेनाय ले

रव्यता मेवं क्रियतामिति ॥

---

राजेति ॥ राजा । प्राह । तेनहि - तेनहेतुना । मन्त्रिपरिषदं - सचिववर्गंप्रति । ब्रूहि - वद । एवम् - अनेनप्रकारेण । क्रियतां - विधीयतामिति । सेनान्ये - सेनाधिपाय । वीरसेनाय - एतन्नाम्ने । लेखयतां- पत्रिकाप्रेष्यताम् ॥

---

कञ्चु ॥ य दाज्ञापयति देवः । इति निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनःप्रविष्टः । अनुष्ठिता प्रभो राज्ञा । अयं देवस्य सेनापतेः पुष्पमित्रस्य सकाशा त्सोत्तरीयप्राभृतको लेखः प्राप्तः । प्रत्यक्षीकरो त्वेनं देवः ॥

---

कञ्चुकीति ॥ कञ्चुकी । वदति । देवः- महाराजः । यदाज्ञापयति - यन्नियोजयति । तथाकरोमीतिवाक्यशेषः । इति - एवमुक्त्वा । निष्क्रम्य - निर्गत्य । सप्राभृतकम् - सप्रावरणम् । लेखं - पत्रिकां । गृहीत्वा - आदाय । पुनः - भूयः । प्रविष्टः - राजनिकटंप्राप्तस्सन् । ब्रवीति । प्रभोः - राज्ञः । आज्ञा - निदेशः । अनुष्ठिता - कृता । देवस्य- राजस्संबन्धिनः । पुष्पमित्रस्य - एतन्नामकस्य । सेनापतेः - सैन्याधिपस्य । सकाशात - समीपात् । सोत्तरीयप्राभृतकः - उत्तरीयरूपप्रावरणसहितः । अयंलेखः - एषापत्रिका । प्राप्तः - उपस्थितः । देवः - राजा । एनम् - इमंलेखम् । प्रत्यक्षीकरोतु - विलोकयतु ॥

---

राजा ॥ उत्थाय सप्राभृतकं लेखं सोपचारं गृहीत्वा परिजना यार्पयति ॥

---

राजेति ॥ राजा । उत्थाय - उद्गम्य । सप्राभृतकम् - प्रावारस हितं । लेखं - पत्रिकां । सोपचारं - सगौरवंयथातथा । गृहीत्वा - स्वी कृत्य । परिजनाय - भृत्यजनाय । अर्पयति - प्रयच्छति ॥

---

परिजनो लेखं नाट्ये नोद्घाटयति ॥

---

परिजनइति ॥ परिजनः - भृत्यजनः । नाट्येन - अभिनयेन । लेखं - पत्रिकाम् । उद्घाटयति - विस्रंसयति ॥

---

धारि ॥ अम्महे तदोमुहंएव्व णो हिअअं । सुणिस्संदाव गुरुअणकुसळाणंतरं वसुमित्तस्स वुत्तंतं । अदिभारेक्खु पुत्त ओ सेणापदीणिउत्तो । छा ॥ अहह तन्मुखमेव नो हृदयम् ! श्रोष्यामिताव द्गुरुजनकुशलानन्तरं वसुमित्रस्य वृत्तान्तम् । अतिभारेखलु पुत्रक स्सेनापतिनियुक्तः ॥

---

धारिणीति ॥ धारिणी । वदति । अहहेतिहर्षे । नः - अस्माकं । हृदयम् - चित्तं । तन्मुखम् - तद्वृत्तान्तप्रवणमेव । गुरुजनकुशलानन्तरं- गुरुजनस्य - पूज्यजनस्य । कुशलानन्तरम् - क्षेमवार्ताश्रवणानन्तरम् । वसुमित्रस्य - एतदाखचस्यपुत्रस्य । वृत्तान्तम् - क्षेमोदन्तम् । तावत् - इदानीं । श्रोष्यामि - आकर्णयिष्यामि । पुत्रकः - कुमारोवसुमित्रः । अ तिभारे - अतिकष्टतरेकार्ये । सेनापतिनियुक्तःखलु । सेनापतिना - सैन्याधिपेन । नियुक्तःखलु - आज्ञप्तोहि ॥

---

राजा ॥ उपविश्य लेखं वाचयति । स्वस्ति यज्ञशरणा त्से नापतिः पुष्पमित्रो वैदिशस्थं पुत्र मायुष्मन्त मग्निमित्रं स्ने

ह्या त्परिष्व ज्यानुदर्शयति। विदितमस्तु। योऽसौ राजयज्ञदी क्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तार मादिश्य व त्सराय निवर्तनीयो निरर्गळ स्तुरङ्गमो विसर्जितः। स सिन्धो र्दक्षिणे रोधसि चर न्नश्वानीकेन यवनेन प्रार्थितः। तत उभ यो स्सेनयो र्महा नासी त्सम्मर्दः॥

---

राजेति॥ राजा। उपविश्य - निषण्णोभूत्वा। लेखं - पत्रिकां। वाचयति - पठति। किमिति। स्वस्ति - राज्ञेभद्रमस्तु। पुष्पमित्रः - एतन्नामकः। सेनापतिः - सैन्यनायकः। वैदिशस्थं - विदिशापुरस्थितम्। आयुष्मन्तम् - चिरजीविनं। अग्निमित्रम् - एतन्नामानम्। पुत्रम् - तनयम्। स्नेहात् - प्रेम्णः। परिष्वज्य - आलिङ्ग्य। यज्ञशरणात् - यज्ञागारात्। अनुदर्शयति - प्रबोधयति। विदितमस्तु - बुद्धम्भवतु। मया। राजपुत्रशतपरिवृतं - शतसंख्याकक्षत्रियकुमारपरिवेष्टितं। वसुमित्रम् - वसुमित्राख्यंत्वत्पुत्रम्। गोप्तारं - रक्षितारं। राजयज्ञदीक्षितेन - राजार्हाध्वरदीक्षया। सू॥ नपुंसकेभावेक्तः॥ आदिश्य - नियुज्य। वत्सराय - हायनाय। निवर्तनीयः - पुनरानेतव्यः। निरर्गळः - निष्प्रतिबन्धः। योऽसौ - योऽयं। तुरङ्गमः - अश्वः। विसर्जितः - त्यक्तः। सः - अश्वः। सिन्धोः - समुद्रस्य। दक्षिणे - दक्षिणभागस्थे। रोधसि - तीरे। चरन् - गच्छन्। अश्वानीकेन - वाजिसैन्ययुक्तेन। यवनेन - तुरुष्केण। प्रार्थितः - गृहीतः। ततः - अनन्तरम्। उभयोस्सेनयोः - द्वयोर्वसुमित्रयवनसेनयोः। महान् - उत्कृष्टः। सम्मर्दः - संग्रामः। आसीत् - अभूत्॥

---

धारिणी विषादं नाटयति॥

---

धारिणीति ॥ धारिणी - एतन्नाम्नीपट्टमहिषी । विषादं - क्लेशं । नाटयति - अभिनयति ॥

---

राजा ॥ कथ मीदृशं संवृत्तम्। पुन र्वाचयति ॥

श्लो ॥ ततः परा न्पराजित्य वसुमित्रेणधन्विना ।
प्रसह्य न्हियमाणोमे वाजिराजो निवर्तितः ॥१०॥

---

राजेति ॥ राजा । प्राह । ईदृशम् - एतादृशंकृत्यम् । कथम् - केनवाप्रकारेण । संवृत्तम् - जातम् । इत्युक्त्वा । पुनः - भूयः । वाचयति - पठति । ततइति ॥ ततः - अनन्तरम् । वसुमित्रेण - वसुमित्राख्येन । धन्विना - धनुष्मता । परान् - शत्रून् । पराजित्य - भङ्गंनीत्वा । प्रसह्य - परिभूय । ह्रियमाणः - नीयमानः । मे - मम । वाजिराजः - अश्वोत्तमः । निवर्तितः - पुनरानीतः ॥

---

धारि ॥ इमिणा आस्ससिदं मे हिअअं । छा ॥ अनेना श्वसितं मे हृदयम् ॥

---

धारिणीति ॥ धारिणी । वदति । अनेन - एतद्वृत्तान्तश्रवणेन । मे - मम । हृदयम् - चित्तम् । आश्वसितम् - उज्जीवितम् ॥

---

राजा ॥ लेखशेषं वाचयति। सोऽह मिदानी मंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वो यक्ष्ये। त दिदानी मकालहीनं विगतरोषचेतसा भवता वधूजनेनसह यज्ञसेवना यागन्तव्यमिति॥

---

राजेति ॥ राजा । लेखशेषम् - अवशिष्टपत्रिकार्थम् । वाच

यति - पठति । सोऽहम् । इदानीं - अद्य । पौत्रेण - पुत्रपुत्रेण । अंशुमता - एतन्नाम्नाकुमारेण । सगरः - सगराख्योमहाराजइव । प्रत्याहृताश्वः - वसुमित्रेणयवनात्पुनरानीताश्वस्सन् । यक्ष्ये - यागंकरिष्ये । तत् - तस्मात्कारणात् । इदानीं - सम्प्रति । अकालहीनं - नियतकालमनतिक्रम्य । विगतरोषचेतसा - त्यक्तक्रोधचित्तेन । भवता - त्वया । वधूजनेन सह - स्त्रीजनेनसाकं । यज्ञसेवनाय - यागदर्शनार्थम् । आगन्तव्यम् - आयातव्यमिति । पूर्वेणान्वयः ॥

---

राजा ॥ अनुगृहीतोऽस्मि ॥

---

राजेति ॥ राजा । प्राह । अहम् । अनुगृहीतः - अभ्युपपन्नः । अस्मि - भवामि ॥

---

परि ॥ दिष्ट्या पुत्रविजयेन दम्पती वर्धेते ॥

श्लो ॥ भर्त्रासि वीरपत्नीनां श्लाघ्यानां स्थापिता धुरि ।
वीरसूरिति शब्दोऽयं तनयात्त्वा मुपस्थितः ॥९१॥

---

परिव्राजिकेति ॥ परिव्राजिका । वदति । दिष्ट्या-भागधेयेन । दम्पती - जायापती । सू ॥ पृषोदरादीनियथोपदिष्टमितिजायाशब्दस्यदम्भावोनिपातितः ॥ पुत्रविजयेन - कुमारकर्तृकजयेन । वर्धेते - श्रेयःप्राप्तः । भर्त्रेति ॥ भर्त्रा - स्वामिनाअग्निमित्रेण । श्लाघ्यानाम् - श्रेष्ठानाम् । वीरपत्नीनां - वीरःपतिर्यासांतासांयोषितां । धुरि - अग्रे । स्थापिता - निहितासि । तनयात् - पुत्रात् । वीरसूरिति - वीरमातेति । अयंशब्दः - एषवाचकः । त्वां । उपस्थितः - सम्प्राप्तः ॥

---

धारि ॥ भांदि ! परितुठ्ठम्हि जं पिदरं अणुजादओ व

च्छवो ।छा॥ भवति ! परितुष्टास्मि य त्पितर मनुजातको वत्सकः ॥

---

धारिणीति ॥ धारिणी । वक्ति । भवति - भगवतिपरिव्राजिके । अहं । परितुष्टास्मि - प्रीताभवामि । यत् - यस्मात्कारणात् । वत्सकः - पुत्रकोवसुमित्रः । पितरमनुजातकः - पित्रासदृशोजातः ॥

---

राजा ॥ मौद्गल्य ! ननु कलभेन यूथपते रनुकृतम् ॥

---

राजेति ॥ राजा । प्राह । हे मौद्गल्य । कलभेन - करिशाबकेन । यूथपतेः - गजयूथनाथस्य । चरितमितिशेषः । अनुकृतम् - अनुसृतं ॥

---

कञ्चु ॥ देव अयं कुमारः ॥

श्लो ॥ नैतावता वीरविजृम्भितेन
चित्तस्य नो विस्मय मादधाति ।
य स्याप्रधृष्यः प्रभव स्त्व मुच्चै
रग्ने रपां दग्धुरि वोरुजन्मा ॥९२॥

---

कञ्चुकीति ॥ कञ्चुकी । वदति । किमिति । देव - हे राजन् । अयंकुमारः - एषवसुमित्रः । एतावता - शत्रुजयपूर्वकाश्वाहरणमात्रेण । वीरविजृम्भितेन -शूरचरितेन । नः - अस्माकम् । चित्तस्य - चेतसः। विस्मयम् - आश्चर्यं । नादधाति - नकरोति । कुतः । अप्रधृष्यः - अन्यैर्धर्षयितुमशक्यः । त्वं । यस्य - वसुमित्रस्य । अपांदग्धुः - अब्धिदहनस्य । अग्नेः - बडबानलस्य । उच्चैः - लोकोत्तरः । ऊरुजन्मा - और्वमुनिरिव । प्रभवः - जन्महेतुः । जातइतिशेषः ॥

---

राजा ॥ मौद्गल्य ! यज्ञसेनस्याल मुरीकृत्य मोच्यन्तां सर्वे बन्धनस्थाः ॥

---

राजेति ॥ राजा । प्राह। हेमौद्गल्य । यज्ञसेनस्यालम् । यज्ञसेनस्य-यज्ञसेनाख्यस्य नृपतेः । स्यालं - पत्नीसोदर्यम् । उरीकृत्य - अङ्गीकृत्य । तेनसहेत्यर्थः । बन्धनस्थाः - कारास्थिताः । सर्वे - अशेषजनाः । मोच्यन्ताम् - परित्यजयन्ताम् ॥

---

कञ्चु ॥ य दाज्ञापयति देवः । इतिनिष्क्रान्तः ॥

---

कञ्चुकीति ॥ कञ्चुकी । वक्ति । देवः - महाराजः । यदाज्ञापयति - यदनुशास्ति । तत्करोमीतिवाक्यशेषः । इति - एवमुक्त्वा । निष्क्रान्तः - निर्गतः ॥

---

धारि ॥ जयसेणे ! गच्छ इरावदिप्पंहुणं [ मेळकाप्पंहीणं ] अंतेउराणं पुत्तअस्स वुत्तंतं णिवेदेहि । छा ॥ जयसेने ! गच्छ इरावतीप्रमुखानां [ मेलकाप्रमुखाना ] मन्तःपुराणां पुत्रकस्य वृत्तान्तं निवेदय ॥

---

धारिणीति ॥ धारिणी । वदति । हेजयसेने - एतन्नामिकेप्रतिहारि । गच्छ - याहि । इरावतीप्रमुखानाम् - इरावतीप्रभृतीनां । पाठांतरे । मेलकाप्रमुखानाम् - मेलकादीनां । अन्तःपुराणाम् -शुद्धान्तजनानाम् । पुत्रकस्य - कुमारस्य । वृत्तान्तम् - विजयोदन्तं । निवेदय - ज्ञापय ॥

---

प्रतिहारी प्रस्थिता ॥

---

प्रतिहारीति ॥ प्रतिहारी - दौवारिकी । प्रस्थिता - प्रयाता ॥

---

धारि ॥ एहिदाव । छा ॥ एहितावत् ॥

---

धारिणीति ॥ धारिणी । वक्ति । प्रतिहारि । एहितावत् - इत आगच्छ ॥

---

धारि ॥ जनान्तिकम् । जं मए असोअदोहळणिओए मालविआए पडिण्णादं तं, से अभिअणंच णिवेदिअ मुहवअणेण इरावदिं अणुणेहि । तुएक्खु अअं संवादो णब्भंसिदव्वोत्ति । छा ॥ ... य न्मया अशोकदोहदनियोगे माळविकायाः प्रतिज्ञातं तत् तस्या अभिजनञ्च निवेद्य मम वचने नेरावती मनुनय । त्वयाखलु अयं संवादो नभ्रंसितव्यइति ॥

---

धारिणीति ॥ धारिणी । जनान्तिकम् - अपवार्य । वदति । मया । अशोकदोहदनियोगे - एतन्नामकवृक्षस्यदोहलक्रियानिदेशे । माळविकायाः - एतन्नाम्नयाबालिकायाः । यत् । प्रतिज्ञातं - प्रतिश्रुतम् । तत् । तस्याः - माळविकायाः । अभिजनं - सत्कुलप्रसूतिंच । निवेद्य - बोधयित्वा । त्वया । अयंसंवादः - एषविषयः । नभ्रंशितव्यःखलु - न विघटयितव्योहि । इति - इत्थम् । मम । वचनेन - वाक्येन । इरावतीम् - एतन्नाम्नींमत्सपत्नीम् । अनुनय - प्रार्थय ॥

---

प्रति ॥ जं देवी आणवेदि । इति निष्क्रम्य पुनः प्रविश्य च । भट्टिणि पुत्तविजयणिमित्तेण परितोसेण अंतेउराणं आभरणा

णं मंजूसिआ अम्हि संवुत्ता । छा ॥ य दे व्याज्ञापयति । ... भट्टिनि ! पुत्रविजयनिमित्तेन परितोषे णान्तःपुराणा माभर णानां मञ्जूषिकास्मि संवृत्ता ॥

---

प्रतिहारीति ॥ प्रतिहारी । वदति । देवी । यदाज्ञापयति - य न्नियुंक्ते । तत्करोमीतिवाक्यशेषः । इति - एवमुक्त्वा । निष्क्रम्य - निर्ग त्य । पुनः - भूयः । प्रविश्य - प्राप्यच । वक्ति । हे भट्टिनि - राज्ञि । पुत्रविजयनिमित्तेन - कुमारजयहेतुकेन । परितोषेण - प्रमोदेन । अन्तःपु राणाम् - अवरोधजनसम्बन्धिनां । तद्दत्तानामित्यर्थः । आभरणानाम् - भूषणानाम् । मञ्जूषिका - पेटिका । संवृत्ता - जातास्मि ॥

---

धारि ॥ अळं । किं अच्चरअं । साधारणो णं अब्भुद ओ । छा ॥ अलं । किं माश्चर्यम् । साधारणो न न्वभ्युदयः ॥

---

धारिणीति ॥ धारिणी । वदति । अलं - पर्याप्तम् । बहूक्त्वे तिशेषः । किमाश्चर्यम् - अत्राद्भुतंकिंवावर्तते । अभ्युदयः - पुत्रविजयरू पाभिवृद्धिः । साधारणोननु - समानःखलु ॥

---

प्रती ॥ जनान्तिकम् । भट्टिणि ! इरावदी विण्णवेदि । स रिसंक्खु पहुवीए पहुवंतीए तुह वअणं । संकप्पिदे ण जुज्जे दि अण्णहा कादुंति । छा ॥ ... भट्टिनि ! इरावती विज्ञापयति । सदृशंखलु पृथिव्याः प्रभवन्त्या स्तव वचनम् । संकल्पिते न युज्य तेऽन्यथा कर्तुमिति ॥

---

प्रतिहारीति ॥ प्रतिहारी । जनान्तिकम् - नियतश्राव्यंयथात

था। वक्ति। हे भट्टिनि - देवि। इरावती। विज्ञापयति - निवेदयति। स्वामितिशेषः। किमिति। पृथिव्याः-भूमेः। प्रभवन्त्याः - स्वामिन्याः। तव। वचनम् - इदंवाक्यम्। सदृशंखलु - अनुरूपमेव। संकल्पिते - निश्चितार्थे। अन्यथा - इतरप्रकारेण। कर्तुम् - विधातुं। नयुज्यते - नोचितमिति। पूर्वेणानुषङ्गः॥

---

धारि॥ **भअवदि! तुए अणुमदं इच्छामि अज्जसुमदिणा पढमं किदं अज्जउत्तस्स मालविअं उववादेदुं।** छा॥ **भगवति! त्व यानुमत मिच्छाम्यार्यसुमतिना प्रथमं कृता मार्यपुत्रस्य माळविका मुपपादयितुम्॥**

---

धारिणीति॥ धारिणी। वक्ति। हे भगवति - पूज्येपरिव्राजिके। आर्यसुमतिना - पूज्येनसुमतिना। प्रथमम् - पूर्वम्। आर्यपुत्रस्य - भर्तुः। ममेतिशेषः। उपपादयितुं - प्रदातुम्। कृतां - विहितां। संकल्पितामित्यर्थः। माळविकां - एतन्नामिकांबालिकां। त्वयाअनुमतम् - त्वत्कर्तृकाङ्गीकारं। इच्छामि - वाञ्छामि॥

---

परि॥ **इदानीमपि त्वमेवास्याः प्रभवसि॥**

---

परिव्राजिकेति॥ परिव्राजिका। ब्रवीति। देवि। इदानीं - अद्यापि। अस्याः - एतस्याः माळविकायाः। त्वमेव। प्रभवसि - प्रभुर्भवसि॥

---

धारि॥ माळविकां हस्ते गृहीत्वा। **इमं अज्जउत्तो पिअणिवेदणाणुरूवं पारितोसिअं पडीच्छदु।** छा॥ ··· **इमा मार्य**

पुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु ॥

धारिणीति ॥ धारिणी । माळविकां । हस्तेगृहीत्वा - पाणौधृत्वा । ब्रूते । आर्यपुत्रः - भर्ता । इमां - एनांमाळविकां । प्रियनिवेदनानुरूपम् - इष्टार्पणानुगुणम् । पारितोषिकम् - उपायनम् । प्रतीच्छतु - स्वीकरोतु ॥

राजा व्रीडां नाटयति ॥

राजेति ॥ राजा - अग्निमित्रः । व्रीडां - लज्जां । नाटयति - अभिनयति ॥

धारि ॥ सस्मितम् । किं अवधारेदि अज्जउत्तो । छा ॥ ... किं मवधारय त्यार्यपुत्रः ॥

धारिणीति ॥ धारिणी । सस्मितम् - समन्दहासंयथातथा । वदति । आर्यपुत्रः - भर्ता । किमवधारयति - किंनिश्चिनोति । एतत्परिग्रहणइतिशेषः ॥

विदू ॥ भोदि ! अत्थिक्खु लोअप्पवादो सव्वो जणो णव्ववरो लज्जाउरो होदित्ति । छा ॥ भवति ! अस्तिखलु लोकप्रवाद स्सर्वो जनो नव्यो वरो लज्जातुरो भवतीति ॥

विदूषकइति ॥ विदूषकः । वक्ति । भवति - पूजयेदेवि । लोकप्रवादः - लोकव्यवहारः । अस्तिखलु - विद्यतेहि । कथम् । नव्योवरः - नूतनःपरिणेता । सर्वोजनः - निखिलोलोकः । लज्जातुरः - व्रीडा

कुलः । भवति - सम्पत्स्यतइति ॥

---

राजा विदूषक मवेक्षते ॥

---

राजेति ॥ राजा - नृपः। विदूषकम् । अवेक्षते - अवलोकते॥

---

विदू ॥ अह देवीएव्व किदप्पणिव्विसेसं दिण्णदेवीसंज्ञं मालविअं अत्तभवं पडिग्गाहिदुं इच्छदि । छा ॥ अथ देव्यैव कृतात्मनिर्विशेषां दत्तदेवीसंज्ञां माळविका मत्रभवान् प्रतिग्रहीतु मिच्छति ॥

---

विदूषकइति ॥ विदूषकः । वदति । अथ - आदौ । देव्या - पट्टमहिष्यैव । दत्तदेवीसंज्ञां - प्रतिपादितदेवीनाम्नीम् । कृतात्मनिर्विशेषां - आत्मनाकृताभेदां । माळविकाम् । अत्रभवान् - पूज्योराजा । प्रतिग्रहीतुम् - स्वीकर्तुम् । इच्छति - वाञ्छति ॥

---

धारि ॥ एदाएअ राअदारिआए अहिजणेण दिण्णो एव्व देवीसद्दो । किं पुणरुत्तेण । छा ॥ एतस्याश्च राजदारिका या अभिजनेन दत्तएव देवीशब्दः । किं पुनरुक्तेन ॥

---

धारिणीति ॥ धारिणी । वदति । एतस्याः - अस्याः । राजदारिकायाः - नृपपुत्रिकायामाळविकायाश्च । अभिजनेन - सत्कुलेन । देवीशब्दः - देवीनाम । दत्तः - प्रतिपादितएव । पुनरुक्तेन - पुनर्दत्तेन । किं - किंत्वाप्रयोजनम् ॥

---

परि ॥ मामैवम् ॥

श्लो ॥ अस्माक मुत्सवमणि र्मणिजातिपुरस्कृतः ।
जातरूपेण कल्याणि तर्हि संयोग मर्हति ॥ ९३ ॥

परिव्राजिकेति ॥ परिव्राजिका । वदति । मामैवम् - इत्थंत्व यानवक्तव्यम् । कुतः । अस्माकमिति ॥ हे कल्याणि - शुभशीलेराज्ञि । यद्यपि । मालविका । अस्माकम् । उत्सवमणिः - संतोषदायकंरत्नं । मणिजातिपुरस्कृतः । मणिजात्या - मणित्वरूपजात्या । पुरस्कृतः - शोभितः । तर्हि - तथापि । जातरूपेण - काञ्चनेन । संयोगं - सम्बन्धम् । अर्हति - योग्योभवति ॥ मणे र्यथास्वर्णेन शोभातथास्या अपित्वत्कृता न्निमित्तसमावेशेन शोभेतिभावः ॥

धारि ॥ मरिसेदु भअवदी, अब्भुदअकहाए पढमं अ वगुण्ठणं वसणं णालक्खिदं । जयसेणे ! गच्छ दाव कोसेयं पत्तोण्णं उवणेहि । छा ॥ मर्षयतु भगवती, अभ्युदयकथया प्रथम मवकुण्ठनं वसनं नालक्षितम् । जयसेने ! गच्छताव त्कौशेयं पत्रोर्ण मुपनय ॥

धारिणीति ॥ धारिणी । वदति । भगवती - पूज्यापरिव्राजिका । मर्षयतु - सहताम् । अभ्युदयकथया - पुत्रविजयवृत्तान्तेन । प्रथमम् - आदौ । अवकुण्ठनम् - परिणयाङ्गभूतं अवकुण्ठननामकम् । वसनं - चेलं । नालक्षितं - नविचारितं । विस्मृतमितिभावः । हे जयसेने - एतन्नामिकेप्रतिहारि । तावत् - इदानीं । गच्छ - याहि । पत्रोर्णं - धौतम् । कौशेयम् - क्रिमिकोशोद्भवमंशुकम् । उपनय - समानय ॥

प्रति ॥ जं देवी आणवेदि । इति निष्क्रम्य पत्रोर्णं गृहीत्वा पुनः प्रविश्य । देवि ! एदं । छा ॥ यद्देव्याज्ञापयति । ... देवि ! एतत् ॥

प्रतिहारीति ॥ प्रतिहारी । देवी - राज्ञी । यदाज्ञापयति - य न्नियोजयति । तत्करोमीतिवाक्यशेषः । इति - एवमुक्त्वा । निष्क्रम्य- निर्गत्य । पत्रोर्णं - धौतकौशेयम् । गृहीत्वा - आदाय । पुनः - भूयः । प्रविश्य - प्राप्य । वक्ति । देवि - राज्ञि । एतत् - इदम् । पत्रोर्णमिति शेषः ॥

---

धारि ॥ माळविका मवकुण्ठनवतीं कृत्वा । **अज्जउत्त ! इअं पडिच्छीअदु** । छा ॥ ... **आर्यपुत्र ! इयं प्रतीष्यताम्** ॥

---

धारिणीति ॥ धारिणी । माळविकां । अवकुण्ठनवतीं - धौत कौशेयेन अवकुण्ठनयुक्ताम् । कृत्वा - विधाय । विज्ञापयति । आर्यपु त्र - भर्तः । इयम् - एषामाळविका । प्रतीष्यताम् - परिगृह्यताम् । त्व येतिशेषः ॥

---

राजा ॥ **त्वच्छासनम्प्र त्यनुरक्ता वयम्** । अपवार्य । **हन्त प्रतिगृहीता** ॥

---

राजेति ॥ राजा । प्राह । देवि । वयं । त्वच्छासनम् - त्व न्निदेशंप्रति । अनुरक्ताः - प्रेमयुक्ताः । अपवार्य - त्रिपताकहस्तेन पार्श्व स्थजनप्रतारणार्थमाननमावृत्य । हन्तेतिहर्षे । प्रतिगृहीता - स्वीकृता ॥

---

विदू ॥ **अम्हहे देवीए अणुऊळदा धारिणीए** । इति परि जन मवलोकयति । छा ॥ **अहह ! देव्या अनुकूलता धारिण्याः** ॥

---

विदूषकइति ॥ विदूषकः । ब्रूते । धारिण्याः - एतन्नाम्न्याः । देव्याः - पट्टमहिष्याः । अनुकूलता - समीचीनता । अहह - आश्चर्यका

रिणी । इति - एवमुक्त्वा । परिजनं - भृत्यजनम् । अवलोकयति - पश्यति ॥

परिजनः ॥ माळविका मुपेत्य। जेदुजेदु भट्टिणी। छा ॥ … जयतुजयतु भट्टिनी ॥

परिजनइति ॥ परिजनः - भृत्यजनः । माळविकां । उपेत्य - प्राप्य । ब्रवीति । भट्टिनी - राज्ञी । जयतु - सर्वोत्कर्षेण वर्ततां । आदरा द्विरुक्तिः ॥

धारिणी परिव्राजिकां निर्वर्णयति ॥

धारिणीति ॥ धारिणी । परिव्राजिकां - पण्डितकौशिकीं । निर्वर्णयति - आलोकयति ॥

परि ॥ देवि ! नैतच्चित्रं त्वयि ॥

श्लो ॥ प्रतिपक्षेणापि पतिं सेवन्ते भर्तृवत्सला स्तन्व्यः।
अन्यसरितामपि जलं समुद्रगाः प्रापय न्त्युदधिम् ॥

परिव्राजिकेति ॥ परिव्राजिका । वदति । देवि - राज्ञि । त्वयि । एतत् - इदंमाळविकादानम् । नचित्रम् - नाद्भुतम् । कुतः । प्रतीति ॥ भर्तृवत्सलाः - भर्त्राराधनशीलाः । तन्व्यः - युवतयः । प्रतिपक्षेण - सपत्न्यादिस्त्रियापि । सेवन्ते - उपचरन्ति । तथाहि । समुद्रगाः - अब्धिगामिन्योनद्यः । अन्यसरिताम् - इतरासामपिनदीनां । जलम् - सलिलम् । उदधिं - जलधिं । प्रापयन्ति - नयन्ति ॥

---

प्रविश्य निपुणिका ॥ जेदुजेदु भट्टा। इरावदी विण्णावेदि। जंहि उवआरादिक्कमेण तदा अहं भट्टिणो अवरद्धा। णं सो अत्तणो भट्टा। अणुपदं भट्टिणो अणुरूपं एव्व मए आअरिअं। संपदं पुण्णमणोरहो भट्टा जाओ। अहं पसादमेत्तेणसंभावइदव्वेत्ति। छा ॥ जयतुजयतु भर्ता। इरावती विज्ञापयति। यद्धि उपचारातिक्रमेण त दाहं भर्तु रपराद्धा। ननु स आत्मनो भर्ता। अनुपदं भर्तु रनुरूपमेव मया आचरितं। साम्प्रतं पूर्णमनोरथो भर्ता जातः। अहं प्रसादमात्रेण सम्भावयितव्येति ॥

---

निपुणिकेति ॥ निपुणिका - एतन्नामिका इरावतीपरिचारिका। वदति। किमिति। भर्ता - महाराजः। जयतु - सर्वोन्नत्यविशिष्टोभवतु। आदराद्द्विरुक्तिः। इरावती। विज्ञापयति - निवेदयति। अहं। तदा - तस्मिन्काले। उपचारातिक्रमेण - सत्कारपरिहारेण। अपराद्धाहीतियत् - अपराधंयत्कृतवत्यस्मि। तत्क्षम्यतामितिवाक्यशेषः। कुतः। ननु - भो। सः। त्वं। आत्मनः - मम। भर्ता - पतिःखलु। मया। अनुपदम् - अन्वक्षमेव। भर्तुः - स्वामिनस्तव। अनुरूपम् - अनुकूलमेव। आचरितम् - कृतम्। साम्प्रतम् - इदानीम्। भर्ता - राजा। पूर्णमनोरथः - संपूर्णकामः। जातः - अभूत्। अहं। प्रसादमात्रेण - अनुग्रहेणैव। सम्भावयितव्या - सम्मानयितव्येति पूर्वेणान्वयः ॥

---

धारि ॥ णिउणिए! अवस्सं दे सेविअं अज्जउत्तो जाणिस्सदि। छा ॥ निपुणिके! अवश्यं ते सेवितमार्यपुत्रो ज्ञा

स्यतीति ॥

धारिणीति ॥ धारिणी । वक्ति । निपुणिके । ते - तव । सेवितम् - सेवनम् । आर्यपुत्रः - भर्ता । अवशयम् - निश्चितम् । ज्ञास्यति - अवगमिष्यतीति ज्ञापयेतिशेषः ॥

निपु ॥ अणुगहीदम्हि । इतिनिष्क्रान्ता । छा ॥ अनुगृहीतास्मि … ॥

निपुणिकेति ॥ निपुणिका । वक्ति । अनुगृहीतास्मि - अभ्युपपन्नाभवामि । इति - एवमुक्त्वा । निष्क्रान्ता - निर्गता ॥

परि ॥ देव ! अमुक्तत्वत्सम्बन्धेन चरितार्थं माधवसेनं त्वदाज्ञया दृष्ट्वा नयनसाफल्यं कर्तु मिच्छामि ॥

परिव्राजिकेति ॥ परिव्राजिका । वक्ति । देव - महाराज । अमुक्तत्वत्सम्बन्धेन - अविच्छिन्नभवत्साङ्गत्येन । चरितार्थं - कृतकृत्यम् माधवसेनम् - एतन्नामकंराजानम् । त्वदाज्ञया - भवन्निदेशेन । दृष्ट्वा - वीक्ष्य । नयनसाफल्यम् - नेत्रोत्सवम् । कर्तु - विधातुम् । इच्छामि - स्पृहयामि ॥

धारि ॥ णजुत्तं भअवदि ! अम्हाणं परिच्चत्तुं । छा ॥ नयुक्तं भगवति ! अस्मान्परित्यक्तुम् ॥

धारिणीति ॥ धारिणी । वक्ति । भगवति - पूजयेपरिव्राजिके । अस्मान् । परित्यक्तुम् - विसर्जितुम् । नयुक्तम् - नोचितम् ॥

राजा ॥ भगवति! मदीयेष्वेव लेखेषु तत्रभवत स्त्वा मुद्दिश्य सभाजनानि यापयिष्यामः ॥

---

राजेति ॥ राजा ।प्राह भगवति - पूज्येपण्डितकौशिकि । मदीयेषु - मत्सम्बन्धिषु । लेखेषु - पत्रिकास्वेव । त्वां - भवतीम् । उद्दिश्य- विषयीकृत्य । तत्रभवतः - पूज्यस्यमाधवसेनस्य । सभाजनानि - गौरवाणि । यापयिष्यामः - नेष्यामः ॥

---

परि ॥ युवयोस्स्नेहा त्परवा नयं जनः ॥

---

परिव्राजिकेति ॥ परिव्राजिका । वदति । अयंजनः - अहमित्यर्थः । स्नेहात् - प्रेम्णः । युवयोः । परवान् - परतन्त्रः । अस्मीति शेषः ॥

---

धारि ॥ आणवेदु अज्जउत्तो भूओवि दे किं पिअं उवअरिस्सं । छा ॥ आज्ञापय त्वार्यपुत्रः । भूयोऽपि ते किं प्रिय मुपहरिष्यामि ॥

---

धारिणीति ॥ धारिणी । ब्रवीति । आर्यपुत्रः - भर्ता । आज्ञापयतु - निदेशयतु । अहं । भूयः - पुनरपि । ते - तुभ्यम् । किंप्रियम् - किंवाभीष्टम् । उपहरिष्यामि - उपायनत्वेनदास्यामि । ब्रूहीतिशेषः ॥

---

राजा ॥ यमताव देतावदेव प्रियम् ॥

श्लो ॥ त्वं मे प्रसादसुमुखी भव देवि नित्य

मेतावदेव मृगये प्रतिपालनीयम् ।

भरतवाक्यम् ॥

आशास्य मभ्यधिगमा त्प्रभृति प्रजानां
सम्पत्स्यते नखलु गोप्तरि नाग्निमित्रे ॥९५॥

इ ति नि ष्क्रा न्ता स्स र्वे -

इति श्री काळिदासमहाकवि विरचिते
माळविकाग्निमित्रनामनि
महानाटके पञ्चमोऽङ्कः ॥

राजेति ॥ राजा । प्राह । देवि । एतावत् - इयदेव । तावत् - इदानीं । मम । प्रियम् - इष्टम् ॥ त्वमिति ॥ हे देवि । त्वं । मे - मम । नित्यम् - सर्वदा । प्रसादसुमुखी - प्रसन्ना । भव - सम्पद्यस्व । एतावत्- एतावन्मात्रमेव । प्रतिपालनीयम् - अपेक्षणीयम् । मृगये - अन्वेषयामि ॥ इतःपरं भरतवाक्यं व्याखयायते ॥ आशास्यमिति ॥ प्रजानाम् - जनानां । अभ्यधिगमात्प्रभृति - राजयपरिग्रहादारभ्य । अग्निमित्रे - एतन्नामकेराजनि । गोप्तरि - रक्षकेसति । आशास्यम् - अपेक्षणीयंवस्तु । नसम्पत्स्यतइतिन - नसंभविष्यतीतिन । सम्भविष्यत्येवेत्यर्थः ॥ अनेनआशास्यसिद्धिकथनरूपेण शुभशंसनात्प्रशस्तिर्नाम सन्धयङ्गमुक्तंभवति ॥ यदुक्तम् । प्रशस्तिश्शुभशंसनम् । सर्वत्रनाटकप्रयोगान्तेभरतेनसर्वकालसाधारणे आशीर्वचनेकर्तव्येसति अत्रप्रजानामाशास्यसिद्धिंप्रति गोप्तुरग्निमित्रस्यकथनं तत्कालराजोपलक्षणमितिमन्तव्यम् ॥

इति श्री सङ्गमवलसराजधान्यधिवासीश्वरीरमणविश्वेश्वरचरणारविन्द मक
रन्दास्वादनतुन्दिलेन्दिन्दिरायमाणान्तरङ्गेण , निश्शङ्कवंशपयः पारावार
राकासुधाकरेण, दामोदरगोत्रपवित्रविचित्रचरित्रेण , श्रीमद्वेंकट नि
श्शंकमहीपालपौत्रेण , श्रीपद्मनिश्शंकवसुधाधीशपुत्रेण , श्रीस
न्यासांबागर्भशुक्तिमुक्ताफलेन, संस्कृतादिभाषापञ्चकशास्त्र
जन्यपरिज्ञानेन , श्रीमन्मृत्युञ्जयनिश्शंकक्षोणीपालेन ,
विरचिते मालविकाग्निमित्रव्याख्याने विबुधरञ्जनी
समाख्याने , मृत्युञ्जयक्षोणीपालीय द्विती
याख्याने पञ्चमोऽङ्कः .

मङ्गळं भूयात् ॥